वाचालः[१] वाचाटः
स्वामी[२] अर्शसः[३]
कटकवलयिनी[४] शङ्खनूपुरिणी
कुष्ठी । किलासी
ककुदावर्ती । काकतालुकी
प्राणिस्थात् किं पुष्पफलवान् घटः
पाणिपादवती[५]
चित्रकललाटिकावती
वातकी[६] अतिसारकी
नेह–वातवती[७] गुहा
पिशाचकी[८] पञ्चमी[९] उष्ट्रः
वयसि किम्–पञ्चमवान् ग्रामः
सुखी[१०] दुःखी । माली[११]
ब्राह्मणधर्मी[१२] ब्राह्मणशीली
ब्राह्मणवर्णी । हस्ती[१३]
जातौ किम्–हस्तवान् पुरुषः
वर्णी[१४] पुष्करिणी[१५] पद्मिनी

देशे किं–पुष्करवान् हस्ती
बाहुबली[१६] ऊरुबली
सर्वधनी[१७] सर्वबीजी
अर्थी[१८] अर्थवान्
धान्यार्थी[१९] हिरण्यार्थी
बलवान्[२०] बली
उत्साहवान् । उत्साही
प्रथिमिनी[२१] दामिनी
होमिनी । सोमिनी
संज्ञायां किम्–सोमवान्
कम्बः[२२] कम्भः, कंयुः,
कन्तिः, कन्तुः, कन्तः- कंयः
शम्बः, शभः, शंयुः
शंवः, शन्तुः, शन्तः, शंयः
तुन्दिभः[२३] वलिभः, वटिभः
पामादित्वात्–वलिनः
अहंयुः[२४] अहङ्कारवान्
शुभंयुः-शुभान्वितः

इति मत्वर्थीयप्रयोगाः ।

---

१–'आलजाटचौ बहुभाषिणि' 'कुत्सित इति वक्तव्यम्' । २–'स्वामिन्नैश्वर्ये' (स्वम्=ऐश्वर्यं, तद्वानित्यर्थः) ३–'अर्श आदिभ्योऽच्' । ४–'द्वन्द्वोपतापगर्ह्यात्प्राणिस्थादिनिः' । ५–'प्राण्यङ्गान्न' । ६–'वातातीसाराभ्यां कुक् च' । ७–'रोगे चायमिष्यते' । ८–'पिशाचाच्च' । ९'–वयसि पूरणात्' । १०–'सुखादिभ्यश्च' । ११–'माला क्षेपे' । १२–'धर्मशीलवर्णान्ताच्च' । १३–'हस्ताज्जातौ' । १४–'वर्णाद्ब्रह्मचारिणि' । १५–'पुष्करादिभ्यो देशे' । १६–'बाहूरुपूर्वपदाद्बलात्' । १७–'सर्वादेश्च' । १८–असन्निहितोऽर्थोऽस्य–'अर्थाच्चाऽसंन्निहिते' । १९–'तदन्ताच्च' । २०–'बलादिभ्यो मतुबन्यतरस्याम्' । २१–'संज्ञायां मन्माभ्याम्' । २२–'कंशंभ्यां बभयुस्तितुतयसः' । २३–'तुन्दिबलिवटेर्भः' । २४–'अहं शुभमोर्युस्' । इति मत्वर्थीयाः ।

## अथ प्राग्दिशीयप्रयोगाः।

कुतः[१] कस्मात्, यतः, ततः
इतः[२] अतः[३] अमुतः, बहुतः
उभाभ्याम्। परितः[४] अभितः
कुत्र[५] यत्र, तत्र, बहुत्र
इह[६] क्व[७] कुत्र
कुह[८] स्थः, कुह जग्मथुः
एतस्मिन् ग्रामे सुखं वसामः
अथोऽत्राधीमहे[९] अतो न गन्ता स्मः।
स[१०] भवान्। ततो भवान्
तत्र भवान्। तं भवन्तम्
ततो भवन्तम्, तत्र भवन्तम्
एवं दीर्घायुः

देवानां प्रियः। आयुष्मान्
सदा[११] सर्वदा
एकदा। अन्यदा
कदा। यदा। तदा
काले किं-सर्वत्र देशे। एतर्हि[१२]
काले किम्-इह देशे
अधुना[१३] इदानीम्[१४]
तदा[१५] तदानीम्
कर्हि[१६] कदा। यर्हि-यदा
तर्हि-तदा
एतस्मिन्काले-एतर्हि
सद्यः[१७] परुत्[१८] परारि

---

१—(प्राग्दिशो विभक्तिः*) पञ्चम्यास्तसिल्' (सुब्लुक्) 'कुतिहोः' ('तसिलादयः प्राक्-पाशपः' इत्युक्तेरव्ययत्वम्) २—'इदम इश्'। ३—एतच्छब्दात्पञ्चम्यास्तसिल् (सुब्लुक्) 'एतदोऽन्' (नलोपः) ४—पर्यभिभ्यां च' 'सर्वोभयार्थाभ्यामेव'। ५—'सप्तम्यास्त्रल्'। ६—अस्मिन्निति-'इदमो हः'। ७—'किमोऽत्' 'क्वाऽति'। ८—'वा ह च च्छन्दसि'। ९—'एतदस्त्रतसोस्त्रतसौ चानुदात्तौ'। १०—'इतराभ्योऽपि दृश्यन्ते' 'दृशिग्रहणाद्भवदादियोग एव' ११—सर्वस्मिन् काले—'सर्वैकान्यकिंयत्तदः काले दा'। १२—अस्मिन् काले—'इदमो र्हिल्'। १३—'अधुना'। १४—'इदानीं च'। १५—'तदो दा च'। १६—'अनद्यतने र्हिलन्यतरस्या १७—समानेऽहनि—'सद्यः परुत्परार्यैषमः परेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः' 'समानस्य सभावो द्यश्चाऽहनि'। १८—पूर्वस्मिन् वत्सरे—'पूर्वपूर्वतरयोः पर उदारौ

---

*प्राग्दिशीयानां विभक्तित्वे त्यदाद्यत्वं, "न विभक्तौ तुस्माः" इतीत्संज्ञानिषेधः, "तद्धितश्चासर्वविभक्तिः" इत्यव्ययसंज्ञा, विभक्तिस्वरश्चेति चत्वारि प्रयोजनानि। तथाहि—तच्छब्दात् "पञ्चम्यास्तसिल्" इति तसिल्प्रत्यये, तसिलो विभक्तित्वात् विभक्तौ विधीयमाने "त्यदादीनामः" इति त्यदाद्यत्वे "न विभक्तौ तुस्माः" इति सकारस्येत्संज्ञानिषेधे "तद्धितश्चाऽसर्वविभक्तिः" इत्यव्ययसंज्ञायाञ्च विभक्तेर्लुकि तत इति जायते। एवञ्च प्रयोजनत्रयस्यैकमेवोदाहरणम्। स्वरस्य तु इत इति। अत्रेदंशब्दात्तसिलि "इदम इश्" इति इशादेशे "ऊडिदम्" इत्यादिनेदमः परस्य तस आद्युदात्तत्वम्, असति तु विभक्तित्वे लिति प्रत्ययात्पूर्वमाद्युदात्तत्वं स्यात्, स्पष्टञ्चेदं "सद्यः परुद्" इत्यादि। सूत्रव्याख्यानं परममूले एव द्रष्टव्यम्।

| | |
|---|---|
| ऐषमः[1] परेद्यवि[2] अद्यः[3] | उभयद्युः[5] तथा[6] यथा |
| पूर्वेद्युः[4] अन्येद्युः, उभयेद्युः | इत्थम्[7] कथम्[8] |

इति प्राग्दिशीयप्रयोगाः ।

## अथ स्वार्थिके प्रागिवीयप्रयोगाः ।

| | |
|---|---|
| पुरः-पुरस्तात्[1] | प्राक्[5] उदक् |
| अधः-अधस्तात् | ( एवं देशे काले च ) |
| अवः-अवस्तात् | उपरि-उपरिष्टाद्वा-वसति[6] |
| अवस्तात्[2] अवरस्तात् | आगतो-रमणीयं वा |
| एवं देशे काले च | पश्चात्[7] उत्तरात्[8] अधरात् |
| दिशि रूढेभ्यः किम् ऐन्द्र्यां वसति | दक्षिणात् |
| सप्तम्याद्यन्तेभ्यः किं पूर्वग्रामे गतः | उत्तरेण[9] अधरेण, दक्षिणेन |
| दिगादिवृत्तिभ्यः किं- | पूर्वेण ग्रामम् |
| पूर्वस्मिन् गुरौ वसति | अपरेण ग्रामम् |
| दक्षिणतः[3] उत्तरतः | दक्षिणा[10] वसति |
| परतः[4] अवरतः | दक्षिणादागतः |
| परस्तात् । अवरस्तात् | दक्षिणाहि[11]-दक्षिणा |

च संवत्सरे'। १—अस्मिन् संवत्सरे—'इदम इश् समसण् प्रत्ययश्च संवत्सरे'। २—परस्मिन्नहनि-'परस्मादेद्यव्यहनि'। ३-अस्मिन्नहनि-'इदमोऽश् द्यश्च'। ४-पूर्वस्मिन्नहनि—'पूर्वादिभ्योऽष्टभ्योऽहन्ये द्युस्'। ५-'द्युश्चोभयाद्वक्तव्यः'। ६-'तेन प्रकारेण-'प्रकारवचने थाल्'। ७-अनेन एतेन वा प्रकारेण—'इदमस्थमुः' 'एतदोऽपि वाच्यः'। ८-केन प्रकारेण-'किमश्च'। इति प्राग्दिशीयप्रकरणम् ।

१—'पूर्वाधरावराणामसिपुरधवश्चैषाम्' ( पूर्वस्यां पूर्वस्याः पूर्वा वा दिगित्यर्थः )। पूर्वाशब्दात् 'दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः' इति अस्तातिप्रत्यये कृते 'अस्ताति च' इति पूर्वाशब्दस्य पुरादेशे 'पुरस्तात्' इति। २-'विभाषाऽवरस्य' ( पूर्वस्मिन् पूर्वस्मात् पूर्वो वा देशः, कालो वा-पुरः पुरस्तादित्यादि)३—'दक्षिणोत्तराभ्या मतसुच्'। ४-'विभाषा परावराभ्याम्'। ५—प्राच्यां प्राच्याः प्राची वा दिक्-'अञ्चेर्लुक्'। ६—'उपर्युपरिष्टात्'। ७—'पश्चात्'—अवरस्य पश्चभावः, आतिश्च प्रत्ययोऽस्तातेर्विषये। ८—'उत्तराऽधरदक्षिणादातिः'। ९-'एनबन्यतरस्यामदूरेऽपञ्चम्याः'। १०-'दक्षिणादाच्'। ११—'आहि च दूरे'।

उत्तराहि[1]-उत्तरा
चतुर्धा[2]-पञ्चधा
एकं राशिं पञ्चधा [3]कुरु
ऐकध्यम्[4] एकधा
द्वैधम्[5] द्विधा। त्रैधम्-त्रिधा
पथि द्वैधानि[6] द्वेधा[7] त्रेधा
भिषक्पाशः[8]
द्वितीयः[9] तृतीयः
द्वैतीयीकः[10] द्वितीयः
तार्तीयीकः-तृतीयः
द्वितीया[11]-तृतीया ( विद्येत्येव )
चतुर्थः[12] पञ्चमः
षाष्ठ[13] षष्ठः। आष्टमः-अष्टमः
षष्ठको[14] भागो मानं चेत्
अष्टमो भागः पश्चङ्गं चेत्
षष्ठः-षाष्ठः
अष्टमः-आष्टमः
एकः[15] एकाकी-एककः

आढ्यचरः[16]
कृष्णरूप्यः[17] कृष्णचरः
शुभ्रारूप्यः
आढ्यतमः[18] लघुतमः-लघिष्ठः
किंतमाम्[19] प्राह्णेतमाम्
पचतितमाम्। उच्चैस्तमाम्
द्रव्यप्रकर्षे तु—उच्चैस्तमस्तरुः
लघुतरः[20] लघीयान्
उदीच्याः प्राचेभ्यः पटुतराः-पटीयांसः
( प्रथिष्ठः प्रथीयान् )
नेह-पाचकतरः-पाचकतमः[21]
करिष्ठः[22] दोहीयसी-धेनुः
श्रेष्ठः[23]श्रेयान्, ज्येष्ठः[24]ज्यायान्[25]
ज्येष्ठः[26]-ज्यायान्
नेदिष्ठः[27] नेदीयान्
साधिष्ठः-साधीयान्
स्थविष्ठः[28] दविष्ठः, यविष्ठः
ह्रसिष्ठः, क्षेपिष्ठः, क्षोदिष्ठः

---

१—'उत्तराच्च'। २—'सङ्ख्याया विधार्थे धा'। ३—'अधिकरणविचाले च'। ४—'एकाद्धो ध्यमुञन्यतरस्याम्'। ५—'द्वित्र्योश्च धमुञ्'। ६—'धमुञन्तात् स्वार्थे डदर्शनम्'। ७—'एधाच्च'। ८—कुत्सितो भिषक्—'याप्ये पाशप्'। ९—'पूरणाद्भागे तीयादन्'। १०—'तीयादीकक् स्वार्थे वाच्यः'। ११—'न विद्यायाः'। १२—'प्रागेकादशभ्योऽच्छन्दसि'। १३—षष्ठो भागः—'षष्ठाष्टमाभ्यां ञ च'। १४—'मानपश्वङ्गयोः कन्लुकौ च'। १५—'एकादाकिनिच्चाऽसहाये'। १६—आढयो भूतपूर्वः—'भूतपूर्वे चरट्'। १७—कृष्णस्य भूतपूर्वो गौः—'षष्ठ्या रूप्य च'। १८—अयमेषामतिशयेनाऽऽढ्यः—'अतिशायने तमबिष्ठनौ'। १९—'तिङश्च'। 'तरप्तमपौ घः' 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे'। २०—अयम्—अनयोरतिशयेन लघुः—'द्विवचनविभज्योपपदे तरबीयसुनौ'। २१—'अजादी गुणवचनादेव'। २२—अतिशयेन कर्ता—'तुश्छन्दसि' 'तुरिष्ठेमेयस्सु'। २३—अयम्—अनयोरतिशयेन प्रशस्तः—'प्रशस्यस्य श्रः' 'प्रकृत्यैकाच्'। २४—'ज्य च'। २५—'ज्यादादीयसः'। २६—अयम्—अनयोरतिशयेन वृद्धः—'वृद्धस्य च'। २७—'अन्तिकबाढयोर्नेदसाधौ'। २८—'स्थूल-दूर-युव-ह्रस्व-क्षिप्र-क्षुद्राणां यणादिपरं पूर्वस्य च गुणः'।

ह्रसिमा, क्षेपिमा, क्षोदिमा
प्रेष्ठः[१] स्थेष्ठः, स्फेष्ठः, वरिष्ठः
बंहिष्ठः, गरिष्ठः, वर्षिष्ठः
त्रपिष्ठः, द्राघिष्ठः, वृन्दिष्ठः
एवमियसुन्
भूमा[२] भूयान् । भूयिष्ठः[३]
कनिष्ठः[४] कनीयान्
पक्षे–यविष्ठः, अल्पिष्ठः, इत्यादि
स्रजिष्ठः[५] स्रजीयान्
त्वचिष्ठः-त्वचीयान्
पटुरूपः[६] पचतिरूपम्
विद्वत्कल्पः[७] यशस्कल्पम्
यजुष्कल्पम् । विद्वद्देश्यः-
विद्वद्देशीयः । पचतिकल्पम्
बहुपटुः[८] पटुकल्पः
सुपः किम्–यजतिकल्पम्
पटुप्रकारः—पटुजातीयः[९]
अश्वकः[१०] उच्चकैः–नीचकैः
सर्वके, विश्वके
युवकयोः[११] आवकयोः

युष्मकासु, अस्मकासु
युष्मकाभिः, अस्मकाभिः
ओकार इत्यादि किम्—
त्वयका, मयका
तूष्णीकामास्ते[१२]
तूष्णींशीलः-तूष्णीकः[१३]
पचतकि । जल्पतकि
धकित् । हिरकुत्
कुत्सितोऽश्वः—अश्वकः[१४]
शूद्रकः[१५] राधकः
पुत्रकः[१६] हन्तः ? ते धानकाः[१७]
गुडकाः, पहकि, अद्धकि
अनुकम्पितो देवदत्तो–देविकः-[१८]
देवियः-देविलः–देवदत्तकः
अनुकम्पितो वायुदत्तो—
वायुदत्तकः । वायुकः, पितृकः
अनुकम्पितो बृहस्पतिदत्तो—
बृहस्पतिकः[१९] देवदत्तकः[२०] देवकः
दत्तिकः[२१] दत्तियः दत्तिलः, दत्तकः
देवदत्तः[२२] दत्तः–देवः

१–'प्रिय–स्थिर–स्फिरोरु–बहुल–गुरु–वृद्ध–तृप्र–दीर्घ–वृन्दारकाणां प्र-स्थ–स्फ–वर्बंहि–गर्वर्षि–त्रब्द्राघि–वृन्दाः' । २—'बहोर्लोपो भू च बहोः' । ३—'इष्ठस्य यिट् च' । ४—अयमनयोरतिशयेन युवा अल्पो वा–'युवाऽल्पयोः कनन्यतरस्याम्' । ५—अतिशयेन स्रग्वी–'विन्मतोर्लुक्' । ६—प्रशस्तः पटुः–'प्रशंसायां रूपप्' । ७—ईषदूनो विद्वान्–'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' । ८—ईषदूनः पटुः–'विभाषा बहुच् पुरस्तात्तु' । ९—'प्रकारवचने जातीयर्' । । १०–कस्याऽयमश्वः–'अज्ञाते' । ११–ओकार-सकार–भकारादौ सुपि सर्वनाम्नष्टेः प्रागकच्' । १२–'अकच्प्रकरणे तूष्णीमः काम्वक्तव्यः' । १३–'शीले को मलोपश्च' । १४—'कुत्सिते' । १५—'संज्ञायां कन्' । १६–'अनुकम्पायाम्' । १७—'नीतौ च तद्युक्तात्' । १८–'बह्वचो मनुष्यनाम्नष्ठज्वा' 'घनिलौ च' 'ठाऽजादावूर्ध्वं द्वितीयादचः' । १९—'चतुर्थादच ऊर्ध्वस्य लोपो वाच्यः' । २०–'अनजादौ च विभाषा लोपो वक्तव्यः' । २१–'लोपः पूर्वपदस्य च' । २२–'विनापि प्रत्ययं

सत्यभामा–भामा–सत्या
भानुदत्तः[1] भानुलः
सवितृयः[2] सवितृलः
चतुर्थादनजादौ*
अनुकम्पितः उपेन्द्रदत्तः–
उपडः[3] उपकः–उपियः
उपिलः, उपिकः, उपेन्द्रदत्तकः
सिंहकः[4] शरभकः, रासभकः
कहोडः—कहिकः[5]
वागाशीर्दत्तः—वाचिकः[6]
कथं षडङ्गुलिदत्तः षडिक[7] इति ?
अनुकम्पितः शेवलदत्तः–शेवलिकः[8]

शेवलियः । शेवलिलः
सुपरिकः । विशालिकः
वरुणिकः । अर्यमिकः
व्याघ्रकः[9] सिंहकः
तैलकम्[10] वृक्षकः[11]
वंशकः[12] वेणुकः
कुटीरः[13] शमीरः, शुण्डारः
कुतुपः[14] कासूतरी[15] गोणीतरी
वत्सतरः[16] उक्षतरः
अश्वतरः । ऋषभतरः
अनयोः कतरो[17] वैष्णवः
यतरः, ततरः, कः, यः, सः

पूर्वोत्तरपदयोर्वा लोपो वाच्यः' । १–'उवर्णाल्ल इलस्य च' । २–'ऋवर्णादपि' । ३–'प्राचामुपादेरडज्वुचौ च' । ४—'जातिनाम्नः कन्' । ५—'द्वितीयं सन्ध्यक्षरं चेत्तदादेर्लोपो वक्तव्यः' । ६—'एकाक्षरपूर्वपदानामुत्तरपदलोपो वक्तव्यः' । ७—'षषष्ठाजादिवचनात्सिद्धम्' ८—'शेवल–सुपरि–विशाल–वरुणार्यमादीनां तृतीयात्' । ९–अनुकम्पितो व्याघ्राजिनः–'अजिनान्तस्योत्तरपदलोपश्च' । १०–अल्पं तैलम्–'अल्पे' । ११–'ह्रस्वे' । १२–'संज्ञायां कन्' । १३–ह्रस्वा कुटी–'कुटी–शमी–शुण्डाभ्यो रः' । १४–ह्रस्वा कुतूः–'कुत्वा डुपच्' । १५–ह्रस्वा कासूः–'कासू-गोणीभ्यां ष्टरच्' । १६–'वत्सोक्षाऽश्वर्षभेभ्यश्च तनुत्वे' । १७–'किंयत्तदोर्निर्धारणे द्वयोरेकस्य

* चतुर्थादनजादौ च लोपः पूर्वपदस्य च । अप्रत्यये तथैवेष्ट उवर्णाल्ल इलस्य च चतुर्थादच ऊर्ध्वस्य लोपो वाच्यः । तेन बृहस्पतिदत्तशब्दात् "बह्वचो मनुष्यनाम्नष्ठज्वा" इति ठचि दत्तशब्दस्य लोपे ठस्येकादेशे बृहस्पतिक इति सिद्ध्यति । 'अनजादौ च विभाषा लोपो वक्तव्यः' इति देवदत्तशब्दात्कप्रत्यये दत्तशब्दस्य पाक्षिके लोपे देवदत्तको देवक इति रूपद्वयम् । पूर्वपदस्य च लोपो वा भवति । अनजादाविति नात्र सम्बध्यते । तेन देवदत्तशब्दात् ठचि घनि इलचि कप्रत्यये च क्रमेण दत्तिकः–दत्तियः–दत्तिलः–दत्तक इति रूपाणि सिद्ध्यन्ति । अप्रत्यये–विनापि प्रत्यये पूर्वोत्तरपदयोर्वा लोपः । तेन देवदत्तशब्दात् ठाजादिप्रत्ययस्याऽभावेऽपि पूर्वोत्तरपदयोः क्रमेण लोपे देवदत्तः–दत्तः–देवः इति रूपाणि । सत्यभामा–भामा–सत्या इति च । 'ल' इति लोपस्य पूर्वाचार्यसंज्ञा । उवर्णात्परस्येलचो लोपः स्यात् । "आदेः परस्य" इति इकारस्य लोपः, तेन भानुदत्तशब्दात् "घनिलचौ च" इति इलचि भानुदत्तः–भानुलः, इति सिद्ध्यति ।

कतमो[1] भवतां कठः ? | सकः, यः, सः, कतरः[2]
यतमः, ततमः, यकः, | एषामेकतमः[3] व्याकरणकः[4]

इति स्वार्थिके प्राग्वीयप्रयोगाः ।

---

## अथ स्वार्थिकप्रयोगाः ।

अश्व इव प्रकृतिः—अश्वकः[1]
प्रतिकृतौ किं गोरिव गवयः
अश्वकः[2] उष्ट्रकः। चञ्चा[3] वध्रिका
वासुदेवः[4] शिवः, स्कन्दः
अपण्ये किं हस्तिकान्विक्रीणीते
देवपथः[5] हंसपथः
वास्तेयम्[6] वास्तेयी
शिलेयम्[7] शैलेयम्
शाख्यः[8] मुख्यः, जघन्यः
अग्र्यः, शरण्यः
द्रव्यम्—[9]अयं ब्राह्मणः
कुशाग्रीया[10] बुद्धिः
काकतालीयः[11] देवदत्तस्य वधः
अजाकृपाणीयः । शार्करम्[12]

आङ्गुलिकः[13] भारुजिकः
एकशालिकः[14] ऐकशालिकः
कार्कीकः[15] लौहितीकः स्फटिकः
लौहितध्वज्यः[16] कापोतपाक्यः[17]
कौञ्जायन्यः, ब्राध्नायन्यः
क्षौद्रक्यः[18] मालव्यः, क्षौद्रकौ
आयुधेति किम्—मल्लाः
सङ्घेति किम् सम्राट्
वाहीकेषु किम्—शबराः
अब्राह्मणेति किं—
गोपालकाः, शालङ्कायनाः
वार्केण्यः[19]
आयुधेति किम्—
जातिशब्दान्मा भूत्

---

डतरच्'। १—'वा बहूनां जातिपरिप्रश्ने डतमच्'। २—'किमोऽस्मिन्विषये डतरजपि'। ३—'एकाच प्राचाम्'। ४—'अवक्षेपणे कन्'। इति प्राग्वीयप्रकरणम्।

१—'इवे प्रतिकृतौ'। २—अश्वसदृशस्य संज्ञा—'संज्ञायां च'। ३—चञ्चेव मनुष्यः—'लुम्मनुष्ये' ( चञ्चा तृणमयः पुमान् ) ४—'जीविकार्थे चाऽपण्ये'। ( वासुदेव तुल्या जीविकार्था अविक्रेया प्रतिकृतिरित्यर्थः ) ५—'देवपथादिभ्यश्च' ( देवानां पन्थाः=देवपथः, तत्प्रतिकृतिरित्यर्थः ) ६—वस्तिरिव—'वस्तेर्ढञ्'। ७—शिलेव—'शिलाया ढः'। ८—शाखेव—'शाखादिभ्यो यः'। ९—'द्रव्यं च भव्ये'। १०—'कुशाग्राच्छः'। ११—'समासाच्च तद्विषयात्' १२—'शर्करादिभ्योऽण्'। १३—अङ्गुलीव—'अङ्गुल्यादिभ्यष्ठक्'। १४—'एकशालायाष्ठजन्यतरस्याम्'। १५—कर्कः=शुक्लोऽश्वः, स इव—'कर्कलोहितादीकक्'। १६—'पूगाञ्ञ्योऽग्रामणीपूर्वात्' १७—'व्रातच्फञोरस्त्रियाम्'। १८—'आयुधजीविसङ्घाञ्ञ्यड्वाहीकेष्वब्राह्मणराजन्यात्' ( क्षुद्रको नाम कश्चिदायुधजीविनां वाहीकः देशवासिनां संघः, स एव क्षौद्रक्यः) १९—'वृकाट्टेण्यण्'।

त्रिगर्तषष्ठाः[१]
दामनीयः, दामनीयौ, दामनयः
औलपीयः, औलपीयौ, औलपयः
कौण्डोपरथीयः, दाण्डकीयः
पार्शवः[२] पार्शवौ, पर्शवः
यौधेयः, यौधेयौ, यौधेयाः
आभिजित्यः[३] वैदभृत्यः
शालावत्यः, शैखावत्यः
शामीवत्यः, और्णावत्यः, औमत्यः
लोहितध्वजाः[४] कपोतपाकाः
कौञ्जायनाः, ब्राध्नायनाः
द्विपदिकाम्[५] द्विशतिकाम्
द्विमोदकिकाम्[६]
द्विपदिकाम्[७] द्विशतिकाम्
स्थूलकः[८] अणुकः
चञ्चत्कः[९] बृहत्कः । सुरकः[१०]
छिन्नकं[११] भिन्नकम्, अभिन्नकम्
सामिकृतम्[१२] अर्धकृतम्

बहुतरकम् । बृहतिका[१३]
आच्छादने किं बृहती छन्दः
अषडक्षीणो[१४] मन्त्रः
आशितङ्गवीनम्-अरण्यम्
अलङ्कर्मीणः, अलम्पुरुषीणः
ईश्वराधीनः
प्राचीनम्[१५] प्रतीचीनम्
अवाचीनम् । अर्वाचीनम्
अदिक्स्त्रियां किम्-
प्राची दिक् । उदीची दिक्
दिग्ग्रहणं किं प्राचीना ब्राह्मणी
स्त्रीग्रहणं किं प्राचीनं ग्रामादाम्राः
ब्राह्मणजातीयः[१६]
बन्धुनि किं ब्राह्मणजातिः शोभना
पितृस्थानीयः[१७] पितृस्थानः
सस्थानेन किम्-गोःस्थानम्
आनुगादिकः[१८]
व्यावक्रोशी[१९]

---

( वृको नाम कश्चिदायुधजीविसंघः, स एव वार्केण्यः ) १–त्रिगर्तः षष्ठो वर्गो येषां ते–'दामन्यादित्रिगर्तषष्ठाच्छः' । त्रिगर्तषष्ठाः के इत्याकाङ्क्षायामाह परममूले—'आहुस्त्रिगर्तषष्ठांस्तु कौण्डोपरथदाण्डकी । क्रोष्टुकिर्जालमानिश्च ब्रह्मगुप्तोऽथ जानकिः ॥' ( जानकिः = त्रिगर्तः ) । २—'पर्श्वादि–यौधेयादिभ्योऽणञौ' । ३—अभिजितोऽपत्यम् आभिजितः ( अपत्येऽण् ), आभिजित एव आभिजित्यः—'अभिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णावच्छ्रुमदणो यञ्' ४—'ञ्यादयस्तद्राजाः' । ५—द्वौ द्वौ पादौ ददाति–'पादशतस्य संख्यादेर्वीप्सायां वुन् लोपश्च' ६—द्वौ द्वौ मोदकौ ददाति–'पादशतग्रहणमनर्थकमन्यत्रापि दर्शनात्' । ७–द्वौ पादौ दण्डितः–'दण्डव्यवसर्गयोश्च' । ८—स्थूलप्रकारः—'स्थूलादिभ्यः प्रकारवचने कन्' । ९—अचञ्चन्नपि यश्चञ्चन्निव दृश्यते स–'चञ्चद्बृहतोरुपसंख्यानम्' । १०—सुरावर्णोऽहिः—'सुराया अहौ' । ११–'अनत्यन्तगतौ क्तात्' । १२–'न सामिवचने' । १३–'बृहत्या आच्छादने' । १४–'अषडक्षाशितङ्ग्वलङ्कर्मालम्पुरुषाध्युत्तरपदात्खः' । १५–'विभाषाऽञ्चेरदिक्स्त्रियाम्' । १६–'जात्यन्ताच्छ बन्धुनि' । १७–'स्थानान्ताद्विभाषा सस्थानेनेति चेत्' । १८–'अनुगादिनष्ठक्' । १९–'व्य

सारविणं वर्तते[1]
वैसारिणः[2]
मत्स्येति किं-विसारी देवदत्तः
पञ्चकृत्वो[3] भुङ्क्ते
संख्यायाः किं भूरिवारान् भुङ्क्ते
द्विः[4] त्रिः, चतुः सकृद्भुङ्क्ते[5]
बहुधा[6] दिवसस्य भुङ्क्ते
आसन्नकाले किम्—
बहुकृत्वो मासस्य भुङ्क्ते
अन्नमयम्[7] अपूपमयम्
यवागूमयी
अन्नमयो-यज्ञः
अपूपमयं-पर्व
मौदकिकम्[8] मोदकमयम्
शाष्कुलिकम्-शष्कुलीमयम्
मौदकिको यज्ञः-मोदकमयः
आनन्त्यम्[9] आवसथ्यम्
ऐतिह्यम् । भैषज्यम्
अग्निदेवत्यम्[10] पितृदेवत्यम्

पाद्यम्[11] अर्घ्यम्
नूत्नम्[12] नूतनम्-नवीनम्
प्रत्नम्[13] प्रत्नम्-प्रतनम्-प्रीणम्
भागधेयम्[14] रूपधेयम्
नामधेयम्
आग्नीध्रम्[15] साधारणम्
आग्नीध्री । साधारणी
आतिथ्यम्[16] देवता[17]
अविकः[18] यावकः[19] मणिकः
लोहितकः[20]
लोहितकः[21] कोपेन
लोहितिका[22] लोहिनिका-कोपेन
लोहिनिका[23]-शाटी
कालकं[24] मुखं वैलक्ष्येण
कालकः-पटः । कालिका शाटी
वैनयिकः[25] सामयिकः
औपयिकः[26]
संदेशवाग्वाचिकं[27] स्यात्
कार्मणम्[28] औषधं पिबति
अजातौ किम्—

चः क्रियामञ्' 'न कर्मव्यतिहारे'। १-'अणिनुणः'। २—'विसारिणो मत्स्ये'। ३—'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्'। ४—'द्वित्रिचतुर्भ्यः सुच्'। ५-'एकस्य सकृच्च'। ६-'विभाषा बहोर्धाऽविप्रकृष्टकाले'। ७-'तत्-प्रकृतवचने मयट्'। ८—मोदकाः प्रकृताः-'समूहवच्च बहुषु'। ९—अनन्त एव-'अनन्तावसथेतिहभेषजाञ्ञ्यः'। १०—अग्निदेवतायै इदम्—'देवतान्तात्तादर्थ्ये यत्'। ११—पादार्थमुदकम्—'पादार्घाभ्यां च'। १२येनवस्य नू आदेशस्त्नप्तनप्खाश्च प्रत्यया वक्तव्याः'। १३-'नश्च पुराणे प्रात्'। १४-'भागरूपनामभ्यो धेयः'। १५-'आग्नीध्रसाधारणादञ्'। १६-अतिथये इदम्-'अतिथेर्ञ्यः'। १७-देव एव-'देवात्तल्'। १८-अविरेव 'अवेः कः'। १९-याव एव-'यावादिभ्यः कन्'। २०-लोहित एव मणिः-'लोहितान्मणौ'। २१-'वर्णे चाऽनित्ये'। २२-लोहिताल्लिङ्गबाधनं वा'। २३-'रक्ते'। २४-कालाच्च'। २५-'विनयादिभ्यष्ठक्'। २६-'उपायाद् ह्रस्वत्वं च'। २७-'वाचो व्याहृतार्थायाम् २८-तद्युक्ता

ओषधयः(क) क्षेत्रे रूढाः
प्राज्ञः-पुरुषः[1] प्राज्ञी-स्त्री
दैवतः । बान्धवः
मृत्तिका[2] मृत्स्ना[3] मृत्स्ना
बहुशः[4] अल्पशः
नेह[5] बहु ददात्यनिष्टेषु
अल्पं ददात्याभ्युदयिकेषु
द्विशः[6] माषशः, प्रस्थशः
संख्यैकवचनात्किं घटं घटं ददाति
वीप्सायां किम्-द्वौ ददाति
द्वयोर्द्वयोः स्वामी
प्रद्युम्नः[7] कृष्णतः प्रति
आदितः[8] मध्यतः
पृष्ठतः । पार्श्वतः । स्वरतः । वर्णतः
ग्रामादागच्छति—ग्रामतः[9]
अहीयरुहोः किम्—
स्वर्गाद्धीयते, पर्वतादवरोहति
अतिक्रम्य ग्रहोऽतिग्रहः[10]
चारित्रेणाऽतिगृह्यते
चारित्रतोऽतिगृह्यते
वृत्तेन न व्यथते, वृत्ततो नव्यथते

वृत्तेन क्षिप्तः, वृत्ततः क्षिप्तः
अकर्तरीति किं देवदत्तेन क्षिप्तः
वृत्तेन हीयते-वृत्ततो हीयते[11]
वृत्तेन पापः, वृत्ततः-पापः
अकर्तरीति किं देवदत्तेन हीयते
देवा अर्जुनतोऽभवन्[12]
आदित्या कर्णतोऽभवन्
व्याश्रये किम् वृक्षस्य शाखा
प्रवाहिकातः[13] कुरु
अपनयने किम्—
प्रवाहिकायाः प्रकोपनं करोति
कृष्णीकरोति[14]
ब्रह्मीभवति । गङ्गीस्यात्
दोषाभूतमहः[15] दिवाभूता रात्रिः
गार्गीभवति[16]
शुचीभवति[17] पटू स्यात्
मात्री करोति[18]
अरू करोति[19] उन्मनी स्यात्
उच्चक्षू करोति । विचेतो करोति
विरही करोति विरजो करोति
दधि सिञ्चति[20]

---

युक्तारूकमणोऽण्' । (क) 'ओषधेरजातौ' । १—'प्रज्ञादिभ्यश्च' । २—'मृदस्तिकन्' । ३—प्रशस्ता मृत्—'सस्नौ प्रशंसायाम्' । ४—बहूनि ददाति—'बह्वल्पार्थाच्छस्कारकादन्यतरस्याम्' । ५—'बह्वल्पार्थान्मङ्गलाऽमङ्गलवचनम्' । ६—द्वौ द्वौ ददाति—'संख्यैकवचनाच्च वीप्सायाम्' । ७—'प्रतियोगे पञ्चम्यास्तसिः' । ८—'आद्यादिभ्य उपसंख्यानम्' । ९—'अपादाने चाऽहीयरुहोः' । १०—'अतिग्रहाऽव्यथनक्षेपेष्वकर्तरि तृतीयायाः' । ११—'हीयमानपापयोगाच्च' । १२—'षष्ठ्या व्याश्रये' । १३—'रोगाच्चापनयने' । १४—अकृष्णः कृष्णः सम्पद्यते, तं करोति—'कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः' 'अभूततद्भाव इति वक्तव्यम्' 'अस्य च्वौ' । १५—'अव्ययस्य च्वावीत्वं नेति वाच्यम्' । १६—'क्यच्व्योश्च' ( अगार्ग्यो गार्ग्यः सम्पद्यमानो भवतीत्यर्थः ), १७—'च्वौ च' । १८—( रीङ् तः ) १९—'अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च' । २०—विभाषा

अग्निसाद्भवति-अग्नौ भवति-
अग्निर्भवति
कार्त्स्न्ये किम्—
एकदेशेन शुक्ला भवति पटः
अग्निसाद्भवति[1]-अग्नौ भवति
जलीभवति
राजसात्करोति[2] राजसात्सम्पद्यते
विप्रत्रा[3] करोति, विप्रत्रा सम्पद्यते
विप्रसात्करोति
देये किं-राजसाद्भवति राष्ट्रम्
देवत्रा[4] वन्दे रमे वा
बहुत्रा जीवतो मनः
पटपटा करोति[5]
अव्यक्तानुकरणात्किम्—
दृषत्करोति
द्व्यजवरार्धात्किम्-श्रत्करोति
अवरेति-किं खरटखरटाकरोति
अपटअपटा करोति
अनितौ किम्-पटिति करोति

द्वितीयाकरोति[6] तृतीयाकरोति
शम्बा करोति, बीजा करोति
द्विगुणा करोति[7]-क्षेत्रम्
समया करोति[8]
सपत्रा करोति[9]-मृगम्
निष्पत्रा करोति
अतिव्यथने किम्—
सपत्रं निष्पत्रं वा करोति भूतलम्
निष्कुला करोति[10]-दाडिमम्
सुखा करोति[11]
प्रिया करोति-गुरुम्
दुःखा करोति-[12]स्वामिनम्
शूला करोति-[13]मांसम्
सत्या करोति[14] भाण्डं वणिक्
शपथे तु-सत्यं करोति-विप्रः
मद्राकरोति[15]-कुमारम्
भद्रा करोति[16]
परिवापणे किम्-भद्रं करोति-
भद्रं करोति

इति स्वार्थिकप्रयोगाः ।

---

सातिः कार्त्स्न्ये' 'सात्पदाद्योः' १—अग्निसात्सम्पद्यते-'अभिविधौ सम्पदा च'। २—'तदधीनवचने'। ३—विप्राधीनं देयं करोति-'देये त्रा च'। ४—'देव-मनुष्य-पुरुष—पुरु-मर्त्येभ्यो द्वितीया-सप्तम्योर्बहुलम्'। ५—'अव्यक्तानुकरणाद् द्व्यजवरार्धादनितौ डाच्' 'डाचि विवक्षिते द्वे बहुलम्' 'नित्यमाम्रेडिते डाचीति वक्तव्यम्'। ६—द्वितीयं कर्षणं करोति—'कृञो द्वितीय-तृतीय-शम्ब-बीजात्कृषौ'। ७—'संख्यायाश्च गुणान्तायाः'। ८—'समयाच्च यापनायाम्'। ९—'सपत्र-निष्पत्रादतिव्यथने' (सपुङ्खशरप्रवेशनेन सपत्रं करोतीत्यर्थः) १०—'निष्कुलान्निष्कोषणे'। ११—'सुखप्रियादानुलोम्ये' (अनुकूलाचरणेनानन्दयतीत्यर्थः) १२—'दुःखात्प्रातिलोम्ये' (पीडयतीत्यर्थः) १३—'शूलात्पाके' (शूलेन पचतीत्यर्थः) १४—'सत्यादशपथे' (क्रेतव्यमिति तथ्यं करोतीत्यर्थः) १५—'मद्रात्परिवापणे' (माङ्गल्यमुण्डनेन संस्करोतीत्यर्थः) १६—'भद्राच्चेति वक्तव्यम्' (अर्थः प्राग्वत्) इति स्वार्थिकप्रयोगाः ।

# अथ द्विरुक्तप्रयोगाः ।

पचति-पचति[1]
भुक्त्वा-भुक्त्वा
वृक्षं-वृक्षं सिञ्चति
ग्रामो-ग्रामो रमणीयः
परि-परि[2] वङ्गेभ्यो वृष्टो देवः
परि[3] वङ्गेभ्यः
उपर्युपरि[4] ग्रामम्
अध्यधि सुखम्
अधोऽधो लोकम्
सुन्दर-सुन्दर[5] वृथा ते सौन्दर्यम्
देव-देव वन्द्योऽसि
दुर्विनीत-दुर्विनीत-इदानीं शास्यसि
धानुष्क-धानुष्क वृथा ते धनुः
चोर-चोर घातयिष्यामि त्वाम्
एकैकमक्षरम्[6]
एकैकयाऽऽहुत्या
एकैकस्मै देहि
गतगतः[7] गतगता
पटुपट्वी[8] पटुपटुः

शुक्लशुक्लं रूपम्
शुक्लशुक्लः पटः
मूलेमूले[9] स्थूलः
सर्पःसर्पः[10] बुध्यस्व ३
सर्पः ३ बुध्यस्व ३
लुनीहि[11] लुनीहीत्येवाऽयं लुनाति
अन्योन्यं[12] विप्रा नमन्ति
अन्योन्यौ, अन्योन्यान्
अन्योन्येन कृतम्
अन्योन्यस्मै दत्तम्-इत्यादि
एव-परस्परम् । इतरेतरम्
इतरेतरेण-इत्यादि
अन्योन्याम्[13] अन्योन्यम्
परस्पराम्, परस्परम्
इतरेतराम्, इतरेतरं वा
इमे ब्राह्मण्यौ, कुले वा भोजयतः
'दलद्वये टाबभावः
क्लीबे चाऽद्व्विरहः स्वमोः ।
सामसे सोरलुक् चेति
सिद्धं बाहुलकात्त्रयम्' ॥

---

१—'सर्वस्य द्वे' ( इत्यधिकृत्य ) 'नित्यवीप्सयोः' । २—'परेर्वर्जने' । ३—'परेर्वर्जने वा वचनम्' । ४—'उपर्यध्यधसः सामीप्ये' ( सुखस्योपरिष्टात्समीपे सुखमित्यर्थः ) ५—'वाक्यादेरामन्त्रितस्याऽसूयासम्मति-कोप-कुत्सन-भर्त्सनेषु' ( सौन्दर्यमसहमानस्येदं वाक्यम् ) ६—'एक बहुव्रीहिवत्' । ७—'अबाधे च' । ८—'कर्मधारयवदुत्तरेषु' 'प्रकारे गुणवचनस्य' । ९—'आनुपूर्व्ये द्वे वाच्ये' । १०—'सम्भ्रमेण प्रवृत्तौ यथेष्टमनेकधा प्रयोगो न्यायसिद्धः' । ११—'क्रियासमभिहारे च' । १२—'कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये' 'समासवच्च बहुलम्' 'असमासवद्भावे पूर्वपदस्थस्य सुपः सुर्वक्तव्यः' ॥ १३—'स्त्रीनपुंसकयोरुत्तरपदस्थाया विभक्तेराम्भावो वा वक्तव्यः'

---

"कर्मव्यतिहारे सर्वनाम्नः" इत्यत्र बहुलग्रहणस्य प्रयोजनमाह—**दलद्वये** इत्यादिना ।

प्रियप्रियेण[1] ददाति, प्रियेण वा
सुखसुखेन ददाति, सुखेन वा
यथायथं[2] ज्ञाता
यथाऽऽत्मीयमिति वा
द्वन्द्वं[3] मन्त्रयते
आचतुरं हीमे पशवो द्वन्द्वं
मिथुनायन्ते

माता पुत्रेण मिथुनं गच्छति
पौत्रेण प्रपौत्रेणापीति मर्यादार्थः
द्वन्द्वं व्युत्क्रान्ताः
द्विवर्गसम्बन्धेन पृथगवस्थिताः
द्वन्द्वं यज्ञपात्राणि प्रयुनक्ति
द्वन्द्वं सङ्कर्षणवासुदेवौ
द्वन्द्वं युद्धं प्रवर्तते

इति द्विरुक्तप्रयोगाः ।

**तद्धितप्रकरणं समाप्तम् ।**



१—'अकृच्छ्रे प्रियसुखयोरन्यतरस्याम्' । २—'यथास्वे यथायथम्' । ३—'द्वन्द्वं रहस्य-मर्यादा-वचन-व्युत्क्रमण-यज्ञपात्र-प्रयोगाभिव्यक्तिषु' ।

**इति श्रीरामचन्द्रझा व्याकरणाचार्येण सङ्कलितायां**
**कौमुदीप्रयोगसूच्यां पूर्वार्द्धं सुबन्तम् ।**



स्त्रीलिङ्गेष्वन्यपरेतरशब्देषु कर्मव्यतिहारे द्वित्वे सति पूर्वोत्तरखण्डयोः टाब्निवृत्तिर्बहुलग्रहणस्य प्रथमं प्रयोजनम् । न च सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः । अन्यपरयोरसमासवद्भावात् । न च द्विर्वचनमेव वृत्तिः । 'यां यां प्रियः प्रैक्षत कातराक्षी सा सा' इत्यादावतिप्रसङ्गात् । अत्र हि द्विर्वचनस्य वृत्त्यन्तर्भावे यां यामित्यत्र सा सेत्यत्र च ''सर्वनाम्नो वृत्तिमात्रे'' इति पूर्वखण्डस्य पुंवत्त्वं स्यात् । नपुंसके च ''अन्योऽन्यमितरेतरम्'' इत्यत्र ''अद्ड्डतरादिभ्यः'' इति सोः प्राप्तोऽद्ड् बाहुलकान्न भवतीति तस्य द्वितीयं प्रयोजनम् । 'अन्योऽन्यसंसक्तमहस्त्रियामम्' 'अन्योऽन्याश्रयः' 'परस्पराक्षिसादृश्यम्' 'अपरस्परैः' इत्यादिषु सोर्लुक् प्राप्तो बाहुलकान्न भवतीति सोरलुक्चेति तृतीयं प्रयोजनम् । अत्र कृतद्वित्वेषु समासावयवेषु पूर्वखण्डस्य सुबादेशस्य सोर्लुक् प्राप्तः । सुभावविधानन्तु असमासे चरितार्थम् ।

# अथ तिङन्तप्रकरणम् ।

## तत्र भ्वादिप्रयोगाः ।

भवति[१] भवतः । भवन्ति[२]
भवसि । भवथः । भवथ
भवामि[३] भवावः । भवामः
स भवति[४] तौ भवतः
ते भवन्ति । त्वं भवसि
युवां भवथः । यूयं भवथ
अहं भवामि । आवां भवावः
वयं भवामः
एहि[५] मन्ये ओदनं भोक्ष्यसे
इति भुक्तः सोऽतिथिभिः

एतम् एत वा मन्ये ओदनम्
भोक्ष्येथे, भोक्ष्यध्वे
भोक्ष्ये, भोक्ष्यावहे, भोक्ष्यामहे
मन्यसे । मन्येथे । मन्यध्वे
तेनेह न--एतु भवान् मन्यते
ओदनं भोक्ष्ये इति भुक्तःसोऽतिथिभिः
प्रहासे किम्-एहि मन्यसे
ओदनं भोक्ष्ये इति भुक्तः
सोऽतिथिभिः । इत्यादि
बभूव[६] बभूवतुः । बभूवुः

---

१—'भू सत्तायाम्' तस्मात् भूधातोः 'भूवादयो धातवः' इति सूत्रेण धातुसंज्ञायां धातुत्वात् 'वर्तमाने लट्' इति सूत्रेण लट्यनुबन्धलोपे 'तिप्-तस्-झि-सिप्-थस्-थ-मिब्-वस्-मस्-ताऽऽतां-झ-थासा-थां-ध्वमिड्-वहि-महिङ्' इत्यनेन लस्य स्थाने तिप्यनुबन्धलोपे 'तिङ्शित्-सार्वधातुकम्' इत्यनेन तिपः सार्वधातुकसंज्ञायां गुणे प्राप्ते 'भू-सुवोस्तिङि' इति निषेधे 'कर्तरि शप्' इति शप्यनुबन्धलोपे शपः सार्वधातुकत्वे 'सार्वधातुकार्धधातुकयोः' इति गुणेऽवादेशे च कृते रूपं सिद्धम् । २—'झोन्तः' इति सूत्रेण झस्याऽन्तादेशे 'अतो गुणे' इति विशेषः । ३—'अतो दीर्घो यञि' । ४—'अथोक्तां प्रथम-मध्यमोत्तम-पुरुषव्यवस्थां स्मारयितुमाह-'स भवतीत्यारभ्य 'वयं भवामः' इत्येतत्पर्यन्तम् । ५—'प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च' । ६-'भू' धातोः 'परोक्षे लिट्' इति लिटयनुबन्धलोपे 'तिप्तस्झि—' इत्यादिना 'तिप्' प्रत्यये' 'परस्मैपदानां णलतुसुस्थलथुसणल्वमाः' इति तिपो णलादेशेऽनुबन्धलोपे, नित्यत्वाद्गुणवृद्धी बाधित्वा 'भुवो वुग्लुङ्लिटोः' इति वुगागमेऽनुबन्धलोपे, 'वृद्धः प्रचलन्' न्यायेन 'व्यपदेशिवदेकस्मिन्' इति परिभाषया 'भूव्' इत्यस्यैकाचः प्रथमत्वेन धात्ववयवत्वेन च 'लिटि धातोरनभ्यासस्य' इति द्वित्वे, 'पूर्वोऽभ्यासः' इत्यभ्याससञ्ज्ञायां 'हलादिः शेषः' इत्यनेनाऽभ्यासस्याऽऽदिहल्शेषेऽन्यस्य वकारस्य लोपे च कृते 'ह्रस्वः' इति ह्रस्वे 'भवतेरः' इत्यभ्यासोकारस्याऽकारे 'अभ्यासे चर्च' इति सूत्रेणाऽऽन्तरतम्यात् झलां जश्त्वेन बकारे बभूव इति । अत्र 'असिद्धवदत्राभात्' इत्यनेन वुकोऽसिद्धत्वादुवङ् तु न, 'वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ' इति वार्तिकेनाऽ-

बभूविथ[१] बभूवथुः । बभूव
बभूव । बभूविव । बभूविम
भविता[२] भवितारौ[३] भवितारः
भवितासि । भवितास्थः
भवितास्थ । भवितास्मि
भवितास्वः । भवितास्मः
भविष्यति[४] भविष्यतः
भविष्यन्ति । भविष्यसि
भविष्यथः । भविष्यथ
भविष्यामि । भविष्यावः
भविष्यामः । भवतु[५] भवतात्[६]
भवताम्[७] भवन्तु । भव[८]
भवतात् । भवतम् । भवत

भवानि[९] भवाव । भवाम
अभवत्[१०] अभवताम्
अभवन् । अभवः । अभवतम्
अभवत । अभवम् । अभवाव
अभवाम । भवेत्[११]
सार्वधातुके किम् चिकीर्ष्यात्
भवेताम् । भवेयुः[१२]
भवेः । भवेतम् । भवेत
भवेयम् । भवेव । भवेम
भूयात्[१३] भूयास्ताम् । भूयासुः
भूयाः । भूयास्तम् । भूयास्त
भूयासम् । भूयास्व । भूयास्म
अभूत्[१४] अभूताम्

---

सिद्धत्वाभावात् । १–'आर्धधातुकस्येड्वलादेः' । २–'अनद्यतने लुट्' 'स्यतासी लृलुटोः' 'आर्धधातुकं शेषः' 'लुटः प्रथमस्य डा–रौ–रसः' 'पुगन्तलघूपधस्य च' 'दीधीवेवीटाम्' । ३–'तासस्त्योर्लोपः' 'रि च' । ४–'लृट् शेषे च' । ५–'लोट् च' 'आशिषि लिङ्–लोटौ' 'एरुः' । ६–'तुह्योस्तातङ्ङाशिष्यन्यतरस्याम्' । ७–'लोटो लङ्वत्' 'तस्थस्थमिपां तान्तन्तामः' 'नित्यं ङितः' । ८–'सेर्ह्यपिच्च' 'अतो हेः' । ९–'मेर्निः' 'आडुत्तमस्य पिच्च' । १०–'अनद्यतने लङ्' 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' 'इतश्च' । ११–'विधि–निमन्त्रणा-ऽऽमन्त्रणा-ऽधीष्ट–सम्प्रश्न–प्रार्थनेषु लिङ्' 'यासुट् परस्मैपदेषूदात्तो* ङिच्च' 'सुट् तिथोः' 'लिङः सलोपोऽनन्त्यस्य' 'अतो येयः' । १२–'झेर्जुस्' 'वस्यपदान्तात्' । १३–'लिङाशिषि' 'किदाशिषि' 'क्ङिति च' । १४–'लुङ्' 'च्लि लुङि' 'च्लेः सिच्' 'गाति–स्था–घु–पा–भूभ्यः सिचः परस्मैपदेषु' 'भूसुवोस्तिङि'

---

* "न ल्यपि" इति सूत्रेणाऽनुबन्धकार्ये कर्तव्ये "अनल्विधौ" इति निषेधो न प्रवर्तते इति ज्ञापितेन स्थानिवद्भावात् लिङ्वृत्तिङित्वधर्मस्यानयनेन ङित्त्वप्रयुक्ते कार्ये सिद्धे "यासुट् परस्मैपदेषूदात्तो ङिच्च" इति सूत्रे ङिद्ग्रहणं व्यर्थमेव । तदेव व्यर्थं सत् 'क्वचिदनुबन्धकार्येऽपि "अनल्विधौ" इति निषेधः प्रवर्तते' इति ज्ञापयति । तेन 'वक्ष्यमाणा' इत्यत्र ङीपोऽभावः सिद्ध इति फलम् । न च भाष्ये "पिच्च ङिन्न ङिच्च पिन्न" इति व्याख्यानादौपदेशिकत्वेन तिबादिवृत्तिपित्वेन आरोपितो लिङ्वृत्तिङित्वधर्मो बाध्यते इति "यासुट्" इति सूत्रे ङिद्ग्रहणं सफलमिति वाच्यम् ? "हलः श्नः शानज्झौ" इत्यत्र पूर्ववत्स्थानिवत्त्वेन शित्वधर्मस्य आनयनेन सिद्धे व्यर्थीभूतेन शानज्घटकशकारेण पूर्वार्थस्य ज्ञापितत्वात् ।

अभूवन्[1]
अभूः । अभूतम् । अभूत
अभूवम् । अभूव । अभूम
हलः किम्-ऐधिषि
अपृक्तस्य किम्-ऐधिष्ट
मा भवान् भूत्[2]
मा स्म भवत्[3] भूद्वा
अभविष्यत्[4] अभविष्यताम्
अभविष्यन् । अभविष्यः
अभविष्यतम् । अभविष्यत
अभविष्यम् । अभविष्याव
अभविष्याम
प्रभवाणि[5] दुःस्थितिः[6] दुर्भवानि

अन्तर्धा[7] अन्तर्धिः अन्तर्भवाणि
प्रणिभवति[8] प्रनिभवति
प्रभवति[9] पराभवति
संभवति । अनुभवति
अभिभवति ।
अथ कत्थन्ताः ३६ अनुदात्तेतः ।
एधते[10] एधेते[11] एधन्ते
एधसे[12] एधेथे । एधध्वे
एधे[13] एधावहे । एधामहे
प्रत्यये किं-वव्रश्च*
एधाञ्चक्रे[14] एधाञ्चक्राते
एधाञ्चक्रिरे । एकाच इति किं-
यङ्लुग्व्यावृत्तिर्यथा स्यात्[15]

---

'अस्तिसिचोऽपृक्ते'। १–'आतः'। २–'माङि लुङ्' 'न माङ्योगे'। ३–'स्मोत्तरे लङ् च'। ४–'लिङ्निमित्ते लृङ् क्रियातिपत्तौ'। ५–'ते प्राग्धातोः' 'आनि लोट्'। ६–'दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः'। ७–'अन्तः शब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वाच्यम्'। ८–'शेषे विभाषाऽकखादावषान्त उपदेशे' इति वा णत्वम्। इहोपसर्गाणामसमस्तत्वेऽपि संहिता नित्या। तदुक्तं 'संहितैकपदे नित्या, नित्या धातूपसर्गयोः नित्या समासे,वाक्ये तु सा विवक्षामपेक्षते।' ९–'उपसर्गेण धात्वर्थो बलादन्यः प्रतीयते। प्रहारा–ऽऽहार–संहार–विहार–परिहारवत्'। १०–'टित आत्मनेपदानां टेरे'। ११–'सार्वधातुकमपित्' 'आतो ङितः'। १२–'थासः से'। १३–'अतो गुणे'। १४–'इजादेश्च गुरुमतोऽनृच्छः' 'आमः' 'कृञ्चाऽनुप्रयुज्यते लिटि' 'आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य' 'लिटस्तझयोरेशिरेच्' 'असंयोगाल्लिट् कित्' 'द्विर्वचनेऽचि' 'उरत्' 'कुहोश्चुः'। १५–'श्तिपा शपाऽनुबन्धेन निर्दिष्टं यद्गणेन च। यत्रैकाऽज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि'।

---

* ओव्रश्चू छेदने, लिटि णल् द्वित्वं "लिट्यभ्यासस्य" इति अभ्यासरेफस्य सम्प्रसारणम् ऋकारः। उरत्। रपरत्वम्। हलादिः शेषः। 'वव्रश्च' इति रूपम्। "उरत्" इत्यत्र अङ्गस्याधिकारो वर्तते। ततश्चाङ्गावयवाभ्यासाकारस्यात्स्यात्प्रत्यये परे इति सूत्रार्थो भवति। एवञ्चात्वादेशः परिनिमित्तो भवतीति वकारस्य सम्प्रसारणे कर्तव्ये "अचः परस्मिन् पूर्वविधौ" इति सूत्रेण ऋकारवृत्तिसम्प्रसारणत्वमकारे आनीय "न सम्प्रसारणे सम्प्रसारणम्" इति सूत्रेण वकारस्य सम्प्रसारणं न भवति। यदि अङ्गेन प्रत्ययस्याक्षेपो न स्यात्तदा "अचः परस्मिन्" इति सूत्राप्रवृत्त्या वकारस्य सम्प्रसारणं स्यादेव।

एधाञ्चकृषे[1] एधाञ्चक्राथे
एधाञ्चकृढ्वे[2] एधाञ्चक्रे
एधाञ्चकृवहे । एधाञ्चकृमहे
एधाम्बभूव । एधामास[3]
एधामासतुः । एधामासुः
एधिता । एधितारौ । एधितारः
एधितासे । एधितासाथे
एधिताध्वे[4] एधिताहे[5]
एधितास्वहे । एधितास्महे
एधिष्यते । एधिष्येते
एधिष्यन्ते । एधिष्यसे
एधिष्येथे । एधिष्यध्वे । एधिष्ये
एधिष्यावहे । एधिष्यामहे
एधताम्[6] एधेताम् । एधन्ताम्
एधस्व[7] एधेथाम् । एधध्वम्
एधै[8] एधावहै । एधामहै
ऐधत[9] ऐधेताम् । ऐधन्त
ऐधथाः । ऐधेथाम् । ऐधध्वम्
ऐधे । ऐधावहि । ऐधामहि
एधेत[10] एधेयाताम् । एधेरन्[11]
एधेथाः । एधेयाथाम् । एधेध्वम्
एधेय[12] एधेवहि । एधेमहि
एधिषीष्ट । एधिषीयास्ताम्
एधिषीरन् । एधिषीष्ठाः
एधिषीयास्थाम् । एधिषीध्वम्

एधिषीय । एधिषीवहि
एधिषीमहि । ऐधिष्ट
ऐधिषाताम् । ऐधिषत[13]
ऐधिष्ठाः । ऐधिषाथाम्
ऐधिढ्वम्[14]-ऐधिध्वम् । ऐधिषि
ऐधिष्वहि । ऐधिष्महि
ऐधिष्यत । ऐधिष्येताम्
ऐधिष्यन्त । ऐधिष्यथाः
ऐधिष्येथाम् । ऐधिष्यध्वम्
ऐधिष्ये । ऐधिष्यावहि
ऐधिष्यामहि
स्पर्धते । पस्पर्धे[15] स्पर्धिता
स्पर्धिष्यते । स्पर्धताम् । अस्पर्धत
स्पर्धेत । स्पर्धिषीष्ट
अस्पर्धिष्ट । अस्पर्धिष्यत
गाधते । जगाधे । बाधते
नाथते[16] अन्यत्र—नाथति
नाधते । दधते
देधे[17] देधाते । देधिरे
अतः किम्—दिदिवतुः
तपरः किम्—ररासे
एकेत्यादि किम्—ततसरतुः
अनादेशादेः किम्—चकणतुः
नेमिथ[18] सेहे

१–'एकाच उपदेशेऽनुदात्तात्' । २–'इणः षीध्वं लुङ्-लिटां धोऽङ्गात्' । ३–'अत आदेः' । ४–'धि च' । ५–'ह एति' । ६–'आमेतः' । ७–''सवाभ्यां वामौ' । ८–'एत ऐ' । ९–''आडजादीनाम्' । १०–'लिङः सीयुट्' । ११–'झस्य रन्' । १२–'इटोऽत्' । १३–'आत्मनेपदेष्वनतः' । १४–'इणः षीध्वं लुङ्-लिटां धोऽङ्गात्' १५–'शर्पूर्वाः खयः' । १६–'आशिषि नाथ इति वाच्यम्' १७–'अत एकहल्मध्येऽनादेशादेर्लिटि' । इत्यकारस्यैकारः, अभ्यासलोपश्च । १८–'थलि च सेटि' ।

स्कुन्दते[1] चुस्कुन्दे
श्विन्दते। शिश्विन्दे
वन्दते। ववन्दे। भन्दते। बभन्दे
मन्दते। ममन्दे। स्पन्दते। पस्पन्दे
क्लिन्दते वैक्लव्यम्। चिक्लिन्दे
मोदते। मुमुदे। ददते
दददे[2] दददाते। दददिरे
अनुस्वदते[3] सस्वदे स्वर्दते
सस्वर्दे। ऊर्दते[4] ऊर्दाञ्चक्रे
कूर्दते। चुकूर्दे। खूर्दते। गूर्दते
गोदते। जुगुदे। सूदते। सुषूदे
( सेक्सृप्सृस्तृस्त्याऽन्ये० * )
ह्रादते। जह्रादे। ह्लादते। स्वादते
पर्दते। यतते। येते
युतते। युयुते। जोतते। जुजुते
वेथते। विविथे। विवेथे
श्रन्थते। ग्रन्थते। कत्थते

अथ ३८ तवर्गीयान्ताः परस्मैपदिनः।

अतति। आत[5] आततुः। आतुः
आतीत्[6] आतिष्टाम्। आतिषुः
मा भवानतीत्[7]—
अतिष्टाम्। अतिषुः
चेतति। चिचेत
अचेतीत्। अचेतिष्टाम्। अचेतिषुः
च्योतति[8] चुच्योत
अच्युतत्[9] अच्योतीत्
श्च्योतति। चुश्च्योत
अश्च्युतत्। अश्च्योतीत्
श्रोतति। मन्थति। ममन्थ
मथ्यात्[10] कुन्थ्यात्। मन्थ्यात्
सेधति। सिषेध। सेधिता
असेधीत्
'बाहुप्रतिष्टम्भविवृद्धमन्युः'[11]

---

१—'इदितो नुम् धातोः'। २—'न शस-दद-वादिगुणानाम्'। ३—"धात्वादेः षः सः" 'सात्पदाद्योः ( इति षत्वनिषेधः )। ४—'उपधायां च'। ५—'अत आदेः'। ६—'इट ईटि' ( सलोपः ) 'सिज्लोप एकादेशे सिद्धो वाच्यः'। ७—'वद-व्रज-हलन्तस्याऽचः' 'नेटि'। ८—'इर इत्सञ्ज्ञा वाच्या'। ९—'इरितो वा'। १०—'किदाशिषी'ति कित्वात् 'अनिदिताम्'इति नलोपः। ११—'स्तन्भेः'

---

* षोपदेशान् सगृह्णाति—"सेक्-सृप्-सृ-स्तृ-सृज्-स्तॄ-स्त्याऽन्ये दन्त्याजन्तसादयः। एकाचः षोपदेशाः ष्वष्क्-स्विद्-स्वद-स्वञ्ज-स्वप्-स्मिङः॥" इति। सेगिति—दन्त्याजन्तसादयः एकाचः षोपदेशाः स्युरित्यन्वयः। दन्त्यश्च अच्च दन्त्याचौ तौ अन्तौ अव्यवहितपरौ यस्य स दन्त्याजन्तः, तथाविधः सः–सकारः आदिर्येषां ते दन्त्याजन्तसादयः। दन्त्यपरकोऽच्परकश्च यः सकारस्तदादय एकाचो धातव इदानीं कृतसत्वास्सकारादित्वेन परिदृश्यमाना अपि षकारादित्वेनोपदिष्टा इति प्रत्येतव्या इत्यर्थः। नन्वेवं सेक्प्रभृतीनामपि षोपदेशत्वं स्यात्, आद्यानां चतुर्णामच्परकसादित्वादन्त्यानाञ्च त्रयाणां दन्त्यपरकसादित्वादतः सेक्प्रभृतीन्वारयति। नन्वेवमपि ष्वष्कादीनामसङ्ग्रहः स्यात्, एषु सकारस्य दन्त्याच्परकत्वाभावात्, अतस्तान्संगृह्णाति—ष्वष्केत्यादिना। अत्र दन्त्यपदेन केवलदन्त्यो गृह्यते, न तु दन्त्योष्ठ्योऽपि ष्वष्कादीनां पृथग्ग्रहणाज्ज्ञापकात्।

निषेधति[1] न्यषेधत्[2] न्यषेधीत्
न्यषेधिष्यत्
निषिषेध[3] निषिषिधतुः
निषिषिधुः । गङ्गां निसेधति[4]
सिषेद्ध[5] सिषेधिथ
सेद्धा । सेधिता
सेत्स्यति । सेधिष्यति
असैत्सीत् । असैद्धाम्[6] असैत्सुः
असैत्सीः । असैद्धम् । असैद्ध
असैत्सम् । असैत्स्व । असैत्स्म
पक्षे-असेधीत् । असेधिष्टाम्
खादति । चखाद[7] खदति । चखाद
चखाद-चखद[8] चखदे
अखादीत्[9] अखदीत्
बदति । बबाद । बेदतुः
बेदिथ । बबाद-बबद
अबादीत् । अबदीत्
गदति । प्रणिगदति[10] जगाद
रराद । रेदतुः
प्रणदति[11] प्रणिनदति

आनर्द[12] आर्दीत्
प्रनर्दति । गर्दति । जगर्द
तर्दति । कर्दति । खर्दति
चखर्द । अन्तति । आनन्त
अन्दति । आनन्द
इन्दति । इन्दाञ्चकार । बिन्दति
गण्डति । निन्दति । प्रणिन्दति
नन्दति[13] नन्द्यात् । चचन्द
ततन्द । चकन्द
क्रन्दति । चक्रन्द । चक्लन्द
क्लिन्दति । चिक्लिन्द
शुन्धति । शुशुन्ध । शुध्यात्

अथ कवर्गीयान्ता अनुदात्तेतः ४२

शीकते । शिशीके । लोकते । लुलोके
श्लोकते । दिद्रेके । दिध्रेके
रेकते । सिसेके । शङ्कते । शशङ्के
अङ्कते । आनङ्के । वङ्कते । मङ्कते
ककते । चकके । कोकते
चुकुके । वर्कते । ववृके[14]
चकते । चेके । वङ्कते । दुढौके

---

( षत्वम् )। १-'उपसर्गात्सुनोति-सुवति-स्यति-स्तौति-स्तोभति-स्था-सेनय-सेध-सिच्-सञ्ज-स्वञ्जाम्'। २-'प्राक्सितादड्व्यवायेऽपि'। ३-'स्थादिष्वभ्यासेन चाऽभ्यासस्य'। ४-'सेधतेर्गतौ'। ५-'स्वरति-सूति-सूयति-धूञूदितो वा' 'झषस्तथोर्धोऽधः'। ६-'झलो झलि'। ७-'अत उपधायाः'। ८-'णलुत्तमो वा'। ९-'अतो हलादेर्लघोः'। १०-'नेर्गद-नद-पत-पद-घु-मा-स्यति-हन्ति-याति-वाति-द्राति-प्साति-वपति-वहति-शाम्यति-चिनोति-देग्धिषु च'। ११-'णो नः'* 'उपसर्गादसमासेऽपि णोपदेशस्य' ( णत्वम् )। १२-'अत आदेः' 'तस्मान्नुड्द्विहलः'। १३-'आदिर्ञिटुडवः'। १४-'ऋदुपधेभ्यो लिटः कित्वं गुणात्पूर्वविप्रतिषे-

---

* णोपदेशास्तु-नर्द शब्दे, नट अवस्यन्दने, नाथृ नाधृ याच्ञादौ, 'टु' नदि समृद्धौ, नश नाशने, नृ नये, नृती गात्रविक्षेपे इति।

तुत्रौके । ष्वष्कते[1] षष्वष्के
अङ्कते । आनङ्घे । वङ्कते । मङ्कते
लाघते । द्राघते । श्लाघते

अथ परस्मैपदिनः ५०

फक्कति । पफक्क । तकति । तङ्कति
बुक्कति । प्रनिकखति
ओखति । ओखाञ्चकार । शाखति
उवोख[2] ऊखतुः । ऊखुः *
उङ्खति । ववखतुः । वङ्खति
मेखतुः । जुङ्गति । अर्घति । जघाघ
मङ्घति । शिङ्घति

अथ चवर्गीयान्ताः । तत्रानुदात्तेतः २१

वर्चते । सेचते । सेचे । सचिता
लोचते । लुलोचे
शेचे । श्वचते । श्वञ्चते
कचते । चकञ्चे । चकाञ्चे
मेचे । मुमुञ्चे । ममञ्चे । पञ्चते

स्तोचते । तुष्टुचे । ऋजते
आनृजे[3] ऋञ्जते । प्राञ्जते
ऋञ्जाञ्चक्रे । भार्जिष्ट
भर्जते । बभृजे । अभर्जिष्ट
एजाञ्चक्रे । ईजाञ्चक्रे

अथ व्रज्यन्ताः परस्मैपदिनः ७२

शोचति । कोचति
कुच्यात् । क्रुच्यात्
लुच्यात् । अच्यात्
पूजायां तु-अञ्च्यात्
वच्यात् । चच्यात्
तच्यात् । त्वच्यात्
अम्रुञ्चीत् । अम्लुञ्चीत्
अम्रुचत्[4] अम्रोचीत्
अम्लुचत्-अम्लोचीत्
जुग्रोच । अग्रुचत्-अग्रोचीत्
जुग्लोच । अग्लुचत्-अग्लोचीत्

---

धेन' । १-'सुब्धातुष्ठिवुष्वष्कतीनां सत्वप्रतिषेधो वक्तव्यः' । २-'अभ्यासस्याऽसवर्णे' । ३-नुड्विधौ ऋकारैकदेशो रेफो हल्त्वेन गृह्यते, तेन द्विहल्त्वान्नुट् । ४-"जॄ-स्तम्भु-म्रुचु-म्लुचु-

---

* उख्धातोः लिटि, तिपि, णलि, द्वित्वे, अभ्यासकार्ये "पुगन्तलघूपधस्य च" इति गुणे "अभ्यासस्यासवर्णे" इत्युवङि 'उवोख' इति न चात्र इजादिगुरुमत्वात् आम् स्यादिति वाच्यम्। सन्निपातपरिभाषाविरोधात् । तथाहि-आर्धधातुकाव्यवहिताङ्गावयव इक् इत्याकारकसम्बन्धेन जायमानो गुणादेशो गुरुमत्वेन इगार्धधातुकयोर्मध्ये पतिष्यतः आम्प्रत्ययस्य निमित्तं न स्यात्। उखधातोः लिटि, लिटस्तसि, अतुसि द्वित्वे अभ्यासकार्ये उ उख् इति स्थितेऽङ्गाधिकारत्वात् "वार्णादाङ्गं बलीयः" इति परिभाषया 'पर्जन्यवल्लक्षणप्रवृत्तिर्भवति' इति युक्त्या पूर्वं ह्रस्वो भवति ततो दीर्घः । दीर्घे च कृते "लक्ष्ये लक्षणं सकृदेव प्रवर्तते" इति न्यायात् पूर्वान्तवद्भावेनैकादेशे प्राप्तो ह्रस्वो न भवति । परत्वाच्चेत्यस्यायमाशयः-"अकः सवर्णे दीर्घः" इति सूत्रस्य परत्वान्नाम परकालेन प्रवृत्तत्वात् । तथा च "हलादिः शेषः" इति सूत्रात्पूर्वं ह्रस्वस्ततः खलोपस्ततो दीर्घः । एवञ्चैकस्मिन् काले ह्रस्वदीर्घयोः प्रवृत्त्यभावेन "वार्णादाङ्गम्" इति परिभाषाया विषय एव नास्तीति दीर्घे कृते 'लक्ष्ये लक्षणम्' इति न्यायाद्ध्रस्वाभावः ।

अक्रोजीत् । अखोजीत्
अग्लुचत् । अग्लुञ्चीत्
सज्जति । सज्जते
गुञ्जति । गुञ्ज्यात्
आनर्च । म्लेच्छति । मिम्लेच्छ
लालच्छ । ललाञ्छ
वाञ्छति । आञ्छति
आञ्छ । अनाञ्छ । जिह्रीच्छ
हूर्च्छति । मूर्च्छति । स्फूर्च्छति

युच्छति । उञ्छति । उञ्छाञ्चकार
व्युच्छति । धर्जति । धृञ्जति
ध्वजति । ध्वञ्जति
ध्वजति । ध्वञ्जति
चुकूज । अर्जति । आनर्ज
सर्जति । ससर्ज । गर्जति । तर्जति
ततर्ज । चकर्ज । चखर्ज । अजति
विवाय[1] विव्यतुः * विव्युः
विवयिथ[2] विवेथ । आजिथ

ग्रुचु-ग्लुचु-ग्लुञ्चु-षस्जश्च' । १-'अजेर्व्यघञपोः' 'बलादावार्धधातुके वेष्यते' । २-'कृ-सृ-भृ-वृ-स्तु-द्रु-स्रु-श्रुवो लिटि' † 'अचस्तास्वत्थल्यनिटो नित्यम्' 'उपदेशेऽत्वतः' 'ऋतो भार-

* नन्वत्र द्वितीयवकारस्य यकारात्मकहल्परकत्वात् "उपधायाञ्च" इति इकारस्य दीर्घः स्यादिति चेद् ? न । ईकारस्थानिकस्य यकारस्य "अचः परस्मिन्" इति स्थानिवत्त्वेन हल्पर-त्वाभावात् । न च "न पदान्त" इति स्थानिवद्भावस्य निषेधः स्यादिति शङ्क्यम्, "स्वरदीर्घ-यलोपेषु लोपाजादेश एव न स्थानिवत्" इत्युक्तेः ।

† ननु "कृसृभृ" एषां त्रयाणामनुदात्तत्वात् "एकाच उपदेशेऽनुदात्तात्" इत्यनेन वृञ उदात्तत्वात् "श्र्युकः किति" इत्यनेन थलोऽकित्वात् "श्र्युकः किति" इत्यस्याप्रवृत्त्या 'ववर्थ' इति वेदे निर्देशाच्च सर्वत्रैवेण्निषेधे सिद्धे चतुर्णां ग्रहणं व्यर्थं सत् "एकाच उपदेशेऽनुदात्तात्" इति प्रकृत्याश्रयेण "श्र्युकः किति" इति प्रत्ययाश्रयेण च लिटोण्निषेधश्चेत्तर्हि क्रादिभ्यश्चतुर्भ्य एवेति नियमयति । वृञस्तु वेदे एवेति च । तेनान्येषां धातूनां लिटीट्, लोके 'ववरिथ' इति च फलद्वयं सिद्ध्यति । स्त्वादीनां चतुर्णां ग्रहणं तु विधित्वसम्भावनया भारद्वाजमतेन ऋदन्तावि-रिक्तस्त्वादीनां थलीडागमः प्राप्नोति तन्निषेधार्थम् । वमादिषु क्रादिनियमेन प्राप्तस्येडागमस्य निषेधार्थञ्चेति विध्यर्थमेव । तथाहि—क्रादिनियमात् क्राद्यन्येषां धातूनां लिटीट्प्राप्तौ अजन्तानाम् "अचस्तास्वत्थल्यनिटो नित्यम्" इत्यनेन थलोण्निषेधे सिद्धे "ऋतो भारद्वाजस्य" इति सूत्रं व्यर्थं सत् अजन्तानामकारवताञ्च थलीण्निषेधश्चेत्तर्हि ऋदन्तानामेवेति सामान्यापेक्षया नियामकम् । तेन थलि ऋदन्तादन्येषां धातूनां भारद्वाजमतेनेटि, अन्येषामाचार्याणां मते इडभावे च पेचिथ पपक्थ विवयिथ विवेथेत्यादिस्थलेषु द्वे द्वे रूपे सिध्यतः । नच भारद्वाजनियमेन स्त्वादा-नामपि थलीट् स्यादिति वाच्यम् । 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा" इति परिभाषया "अचस्तास्वत्थल्यनिटो नित्यम्" "उपदेशेऽत्वतः" इति सूत्रद्वयेन प्राप्तस्यैवेण्निषेधस्य भार-द्वाजनियमस्य निवर्तकत्वात् । क्रादिनियमेन स्त्वादिग्रहणम् "अचस्तास्वत्" इति "उप-देशेऽत्वतः" इति सूत्रद्वयञ्चेण्निषेधार्थं वर्तते । तथाच—यथा भारद्वाजनियमेन ऋदन्तातिरिक्त-

विव्यथुः । विव्य । विवाय-विवय
विव्यिव । विव्यिम । वेता-अजिता
वेष्यति-अजिष्यति
अजतु । आजत् । अजेत्
वीयात् । अवैषीत्[1] आजीत्
अवेष्यत् । आजिष्यत्
एजति । खजति । खञ्जति
एजाञ्चकार । स्फूर्जति । पुस्फूर्ज
क्षयति । चिक्षाय । चिक्षियतुः
चिक्षियुः । चिक्षयिथ-चिक्षेथ
चिक्षियिव । चिक्षियिम
क्षेता । क्षीयात्[2]
अक्षैषीत् । चिक्षीज
तोजति । तुतोज । अव्राजीत्[3]

अथ टवर्गीयान्ताः शाड्यन्ता
अनुदात्तेतः ३६

अट्टते । आनट्टे । वेष्टते । विवेष्टे
अचेष्टिष्ट । जुगोष्टे । लुलोष्टे
जघट्टे । स्फोटते । पुस्फुटे
अण्ठते । आनण्ठे । ववण्ठे
मण्ठते । कण्ठते । मुण्ठते
जिहेठे । एठाञ्चक्रे

हिण्डते । जिहिण्डे
जुहुण्डे । चुकुण्डे । ववण्डे
बभण्डे । पिपिण्डे । मुण्डते
तुण्डते । हुण्डते । चण्डते
शण्डते । तण्डते । पण्डते
कण्डते । जिहेडे । जुहोडे
बाडते । द्राडते । ध्राडते । शाडते

अथ टवर्गीयान्तसमाप्तेः परस्मैपदिनः

शौटति । शुशौट
यौटति । म्लेटति । म्रेडति
चकाट । अकटीत्[4]
आट । आटतुः । आटुः
पपाट । पेटतुः । पेटुः
रराट । ललाट । शशाट
ववाट । ववटतु । ववटुः
ववटिथ । केटति । खेटति
शेटति । शिशेट । सेटति । सिसेट
पटति । केटति । कटति
अयति । इयाय । इयतुः । इयुः
इययिथ-इयेथ । इयाय-इयय
कुण्डति । कुण्डते
मुण्डति । पुण्डति
रुण्टति । लुण्टति

---

द्वाजस्य'। अयमत्र संग्रहः—'अजन्तोऽकारवान्वा यस्तास्यनिट्-थलि वेडयम् । ऋदन्त ईदृक्नित्याऽनिट् क्राद्यन्यो लिटि सेड् भवेत्'। १–'सिचि वृद्धिः परस्मैपदेषु'। २–'अकृत्सार्वधातुकयोर्दीर्घः'। ३–'वद–व्रज–हलन्तस्याऽचः'। ४–'ह्मयन्त–क्षण–श्वस–जागृ–णि–श्व्येदिताम्'।

---

धातुषु सूत्रद्वयं न प्रवर्तते, तथैव स्त्वादिग्रहणमपि न प्रवर्ततामिति न शङ्क्यम् । "अनन्तरस्य" इति न्यायात् ।

अस्फुटत्[1] अस्फोटीत्
स्फुण्टति[2] पेठतुः । पेठिथ
अपठीत्-अपाठीत्
ववठथुः । ववठिथ
हठति । जहाठ
ओठति । ऊठति । ऊठाञ्चकार
शोठति । शुण्ठति । कुण्ठति
चुड्डति । चुचुड्ड
अड्डति । आनड्ड
कड्डति । चिक्रीड । तोडति । तुतोड
हुड्यात् । हूड्यात् । होड्यात्
अडति । आड । आडतुः । आडुः
लडति । कडति । कण्डति । गण्डति
तेपते । तितिपे । तितिपिषे
तेप्ता । तेप्स्यते । तिप्सीष्ट[3]
तिप्सीयास्ताम् । तिप्सीरन्
अतिप्त[4] अतिप्साताम्
अतिप्सत । तेपते । तितेपे
तिष्टिपे । तिष्टिपाते । तिष्टिपिरे
तिष्टेपे । तिष्टेपाते । तिष्टेपिरे
ग्लेपते । वेपते । त्रपते
त्रेपे[5] त्रेपाते । त्रेपिरे
त्रपिता-त्रप्ता । त्रपिषीष्ट-
त्रप्सीष्ट । कम्पते । चकम्पे

ररम्बे । ललम्बे । आनम्बे
चकबे । चिक्लीबे । क्षीबते
शीभते । रिरेभे । अम्भते
स्कम्भते । स्तम्भते । उत्तम्भते[6]
विस्तम्भते ( विष्टम्भते ) ष्टम्भते
जम्भते[7] जजम्भे । जम्भिता
अजम्भिष्ट । जृम्भते । जजृम्भे
शशल्भे । ववल्भे । गल्भते । श्रम्भते
स्रम्भते । स्तोभते । विष्टोभते
तुष्टुभे । व्यष्टोभिष्ट
गोपायति[8] गोपायाञ्चकार[9]
गोपायाम्बभूव । गोपायामास
जुगोप । जुगुपतुः
जुगोपिथ-जुगोप्थ
गोपायिता-गोपिता-गोप्ता
गोपाय्यात्-गुप्यात्
अगोपायीत्-अगोपीत्-
अगौप्सीत्
धूपायति । धूपायाञ्चकार । दुधूप
धूपायितासि-धूपितासि । सपति
चोपति । चुचोप । चोपिता
तोपति । तुतोप । तुम्पति
तुतुम्प । तुतुम्पतुः । तुप्यात्
प्रस्तुम्पति[10] गौः । प्रतोतुम्पोति

( वृद्धिनिषेधः )। १–'इरितो वा' ( इत्यङ् )। २–'इदितो नुम् धातोः' । ३–'लिङ्सिचावात्मनेपदेषु'। ४–'झलो झलि' ( सलोपः )। ५–'तॄ-फल-भज-त्रपश्च'। ६–'उदः स्था-स्तम्भोः पूर्वस्य'। ७–'रधि-जभोरचि' ( नुम् )। ८–'गुपू-धूप-विच्छि-पणि-पनिभ्य आयः' 'सनाद्यन्ता धातवः'। ९–'आयादय आर्धधातुके वा' 'कास्प्रत्ययादाममन्त्रे लिटि' 'कास्यनेकाज्ग्रहणं कर्तव्यम्' 'अतो लोपः'। १०–'प्रात्तुम्पतौ गवि कर्तरीति' ( पारस्करादिगणे पाठात्सुट् )।

ओपति । उम्पति
तोफति । तुम्फति
त्रोफति । त्रुम्फति । पर्पति । पपर्प
रफति । रम्फति । अर्बति । आनर्ब
पर्बति । लर्बति । बर्बति । मर्बति
कर्बति । खर्बति । गर्बति । शर्बति
सर्बति । चर्बति । कुम्बति
लुम्बति । तुम्बति । चुम्बति
सर्भति । ससर्भ । सर्भिता
सृम्भति । ससृम्भ । सृभ्यात्
सेभति । षिम्भति

अथाऽनुनासिकान्ताः । तत्र
कम्यन्ता अनुदात्तेतः १०

घिण्णते । जिघिण्णे । घुण्णते
जुघुण्णे । घृण्णते । जघृण्णे
घोणते । घूर्णते । पणते । पेणे
पणिता । पणायति । पणायाञ्चकार
पेणे । पणायितासि
पणितासे । पणाय्यात् । पणिषीष्ट
पनायति । पनायाञ्चकार
पेने । भामते । बभामे
क्षमते । चक्षमे । चक्षमिषे
चक्षंसे । चक्षमिध्वे
चक्षमिवहे-चक्षण्वहे[1]
चक्षमिमहे-चक्षण्महे
क्षमिष्यते-क्षंस्यते । क्षमते
क्षमेत । क्षमिषीष्ट-क्षंसीष्ट
अक्षमिष्ट-अक्षंस्त । कामयते[2]
कामयाञ्चक्रे[3] चकमे[4]
कामयिता-कमिता
कामयिष्यते-कमिष्यते
अचीकमत[5] अचकमत[6]
संज्ञायाः कार्यकालत्वात *
अणति । रणति । वणति
ववणतुः । ववणिथ
भणति । ओणति
ओणाञ्चकार । शोणति
शुशोण । श्रोणति । पिप्रैण । ध्रणति[7]

---

१–'म्वोश्च' । २–'कमेर्णिङ्' । ३–'अयामन्ताल्वाय्येत्न्विष्णुषु' । ४–'आयादय आर्धधातुके वा' । ५–'णि–श्रि–द्रु–स्रुभ्यः कर्तरि चङ्' 'णेरनिटि' 'ण्यल्लोपावियङ्–यण्–गुण–वृद्धि–दीर्घेभ्यः पूर्वविप्रतिषेधेन' 'णौ चङ्युपधाया ह्रस्वः' 'चङि' 'सन्वल्लघुनि चङ्परेऽनग्लोपे' 'सन्यतः' 'दीर्घो लघोः' । ६–'कमेश्च्लेश्चङ् वक्तव्यः' । ७–'रषाभ्यामिति णत्वम्' ।

---

* शास्त्रेऽस्मिन् 'कार्यकाल संज्ञापरिभाषम्' 'यथोद्देश संज्ञापरिभाषम्' इति पक्षद्वयमप्यस्ति । तत्र कार्यकालपक्षपातिमाधवमतं तावद्व्याचष्टे—

"संज्ञायाः कार्यकालत्वादङ्गं यत्र द्विरुच्यते ।
तत्रैव दीर्घः सन्वच्च नानेकाच्विति माधवः ॥ १ ॥
चकास्त्यर्थापयत्पूर्णोत्यादौ नाङ्गं द्विरुच्यते ।
किं त्वस्यावयवः कश्चित्तस्मादेकाच्विदं द्वयम् ॥ २ ॥
वस्तुतोऽङ्गस्यावयवो योऽभ्यास इति वर्णनात् ।

दन्ध्वनन्ति । वेणतुः । वेणिथ
चकाण । स्तनति । वनति
सनति । ससान । सेनतुः
सायात्[1] सन्यात् । अमति । आम
द्रमति । दद्राम । अद्रमीत्[2]
हम्मति । जहम्म

मीमति । मिमीम । आचामति[3]
आङि किम् चमति
विचमति । अचमीत् । जेमति
क्राम्यति[4] क्रामति । चक्राम
क्राम्यतु-क्रामतु । अक्रमीत्[5]
अथ रेवत्यन्ता अनुदात्तेतः

---

१-'ये विभाषा'। २-'ह्म्यन्तेति वृद्धिनिषेधः। ३-'ष्ठिवुक्लमुचमां शिति' 'आङि चम इति वक्तव्यम्' ४-'वा भ्राश-भ्लाश-भ्रमु-क्रमु-क्लमु-त्रसि-त्रुटि-लषः' 'क्रमः परस्मैपदेषु'। ५-'स्नुक्रमोर-

---

ऊर्णौ दीर्घोऽर्थापयतौ ह्ययं स्यादिति मन्महे ॥ ३ ॥
चकास्तौ तूभयमिदं न स्यात्स्याच्च व्यवस्थया ।
णेर्विशेष्यं सन्निहितं लघुनीत्यङ्गमेव वा ॥ ४ ॥
इति व्याख्याविकल्पस्य कैयटेनैव वर्णनात् ।
णेरग्लोपेऽपि सम्बन्धस्त्वगितामपि सिद्धये ॥ ५ ॥

"सन्वल्लघुनि" "दीर्घो लघोः" इति सूत्रद्वये अङ्गस्येति अभ्यासस्येति चानुवर्तते । तेनाङ्गस्य ये द्वे तयोः पूर्वोऽभ्याससंज्ञकस्तस्येति फलितम् । द्वे इत्यत्र च उच्चारणे इति विशेष्यसमर्पकमध्याह्रियते । तद्योगादङ्गस्येति कर्मणि षष्ठी । तेन यत्र कृत्स्नमङ्गं द्विरुच्यते न तु तदेकदेशमात्रं तत्रैव पूर्वस्य दीर्घसन्वद्भावौ स्त इति । एवञ्चाङ्गस्य एकाच्कत्वे सत्येव तयोः प्रवृत्तिः, नत्वनेकाच्केषु चकास्त्यर्थापयत्यूर्णोत्यादिषु । अत्र ण्यन्तेभ्य एभ्यश्चङि कृत्स्नमङ्गं न द्विरुच्यते, अपि तु हलादेः प्रथमावयवोऽजादेस्तु द्वितीयावयवो द्विरुच्यते । एवञ्चैतेषाम् अचचकासत्; आर्तथपत् । और्णुनवत् इत्येवं रूपाणि भवन्ति । नन्वेवं ह्रस्वहलादिःशेषश्चुत्वादीन्यपि अनेकाच्सु न स्युः । नचेष्टापत्तिः । दिदरिद्रासति, जिगणयिषतीत्यादि लक्ष्यस्य सर्वसम्मतत्वात् । तन्निर्वाहार्थं यथोद्देशपक्षाश्रयत्वाद् आह—वस्तुत इति । अङ्गस्येत्यस्यावयवषष्ठीत्वादङ्गावयवाभ्यासस्येति लभ्यते । ततश्च ऊर्णुञ्‌ ण्यन्ते चङि नु इत्येकदेशस्यापि द्वित्वे और्णुनवदित्यत्र "दीर्घो लघोः" इत्यभ्यासदीर्घं भवति । अर्थमाचष्टे इत्यर्थे णिच्यापुगागमेऽर्थापिधतोश्चङि णिलोपे उपधाह्रस्वे थप् इत्यस्य द्वित्वेऽपि दीर्घस्य 'सन्वत्' इतीत्वस्य च प्रवृत्तौ आर्तिथपदित्येवरूपं भवतीति जानीम इति तृतीयश्लोकार्थः । अङ्गस्यावयव इति पक्षेऽपि चकास्तौ विशेषमाह—चकास्ताविति । उभयमिदमित्यस्य दीर्घः सन्वच्चेत्येतद् द्वयमित्यर्थः । न स्यात्स्याच्च व्यवस्थया—व्यवस्थया पक्षभेदेनेत्यर्थः । चङ्परे णौ यल्लघ्विति व्याख्याने न स्यात् । चङ्परे णौ यदङ्गमिति व्याख्याने तु स्यात् । एवञ्च अचचकासत्, अचीचकासदिति व्याख्याभेदेन रूपद्वयमित्यर्थः । नन्वस्मिन् व्याख्यानभेदे किं प्रमाणमित्यत आह—इति व्याख्याविकल्पस्येति । ननु णौ इत्यस्यावृत्तिमभ्युपगम्याऽग्लोपेऽपि तदन्वयः किमर्थं इत्यत आह—णेरग्लोपेऽपीति । अगितामपीति—कमु कान्तावित्यादीनामपीत्यर्थः । सिद्धये—दीर्घसन्वद्भावसिद्ध्यर्थमित्यर्थः । अन्यथा कमुप्रभृतीनामुकारानुबन्धलोपमादायाग्लोपित्वाद्दीर्घसन्वद्भावौ न स्यातामिति ।

अयते । अयाञ्चक्रे[1]
अयेत । अयिषीष्ट
अयिषीढ्वम्[2] अयिषीध्वम्
आयिष्ट । आयिढ्वम्, आयिध्वम्
प्लायते । पलायते[3]
निरयते । दुरयते
निलयते । दुलयते
कथम्[4]–'उदयति' विततोर्ध्व–
रश्मिरज्जाविति माघः
विवये । पेये । मेये । चेये । तेये
प्रणायते । नयते । नेये । दयाञ्चक्रे
ऊयाञ्चक्रे । पूयते । पुपूये । चुक्नूये
चक्ष्माये । स्फायते । पस्फाये
प्यायते । पिप्ये[5]
पिप्याते । पिप्यिरे
अप्यायि[6] अप्यायिष्ट
तायते । तताये । अतायि अतायिष्ट
ववले । ववल्ले । मेले । ममल्ले
बभले । बभल्ले । कलते । चकले
कल्लते । तितेवे । दिदेवे

परिषेवते[7] सिषेवे । गेवते
जिगेवे । जिग्लेवे । पिपेवे
मेवते । म्लेवते । रेवते

अथावत्यन्ताः परस्मैपदिनः

ममव्य । अहयीत् । शुशुच्य
अहर्य । मलति । आल
मा भवानलीत्[8] अलते
फेलतुः । फेलुः । अफालीत्
निनील । शीलति । तुतूल
फेलतुः । फेलुः । तेलति
तिल्लति । चस्खाल । चस्खालीत्
गलति । अगालीत् । सलति
शश्वाल । अश्वालीत् । शश्वल्ल
अश्वलीत् । खोलति । खोरति
धोरति । तत्सार । अत्सारीत्
चक्मार
अभ्रति । आनभ्र । मा भवानभ्रीत्
ष्ठीवति । तिष्ठेव । तिष्ठिवतुः
तिष्ठिवुः । ष्ठीव्यात्[9]
जयति । जिगाय[10] जिग्यतुः

---

नात्मनेपदनिमित्ते'। १–दयायासश्च' । २–'विभाषेटः'। ३–'उपसर्गस्यायतौ' । ४–उत्पूर्वकाद यधातोः शत्रन्तात्सप्तम्यन्तम् 'उदयति' इति मत्वा आक्षेपः कथमिति, अनुदात्तेत्त्वेन लटः शानच् प्रसंगादिति भावः। उत्तरयति परममूले–'इटकिटकटी' इत्यत्र प्रश्लिष्टस्य ( धातोर्भविष्यति ) यद्वा 'अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम्'* । ५–'लिड्यङोश्च' । ६–'दीप–जन–बुध–पूरि–तायि–प्यायिभ्योऽन्यतरस्याम्' 'चिणो लुक्' । ७–'परि–नि–विभ्यः सेव–सित–सय–सिवु–सह० (षत्वम्) । ८–'अतो ल्रान्तस्य' । ९–'हलि च' । १०–'सन्लिटोर्जेः' ( कुत्वम् ) ।

---

* अयम्भावः—चक्षिङ्धातौ इकाररूपानुदात्तस्वरेणैवात्मनेपदे सिद्धे ङकारोपादानं व्यर्थं सद् "अनुदात्तेत्त्वनिमित्तकमात्मनेपदमनित्यं भवति" इति बोधयति। तेन अयधातोरनुदात्तत्वेऽपि ज्ञापकवचनेन शतृप्रत्ययस्य सिद्धिरिति स्वांशे चारितार्थ्यम्। अन्यत्र फलन्तु 'स्फायन्' इत्यत्र अनुदात्तेत्त्वलक्षणात्मनेपदस्याभाव इति ।

जिग्युः । जिगयिथ-जिगेथ
जिगाय । जिगय
जिग्यिव । जिग्यिम
जेता । जीयात् । अजैषीत्
जिजीव । पिपीव
मिमीव । तितीव । निनीव
ऊर्वाञ्चकार । तुतूर्व[1]
गूर्वति । जुगूर्व । आनर्व
शर्वति । सर्वति । इन्वति
इन्वाञ्चकार । पिन्वति
पिपिन्व । हिन्वति । दिन्वति
धिनोति[2] धिनुतः । धिन्वति
धिनोमि । धिन्वः[3] धिनुवः
धिन्मः-धिनुमः । धिनोमि
धिनु[4] धिनवाव । धिनवाम
जिन्वति । रिण्वति । रण्वति
धन्वति । कृणोति । मवति
मेवतुः । मेव । अमवीत्-
अमावीत् । अवति । आव
मा भवानवीत् । धावति
धावते । दधाव । दधावे
अथोष्मान्ता आत्मनेपदिनः
धुक्षते । दुधुक्षे । धिक्षते
दिधिक्षे । वृक्षते । ववृक्षे
शिक्षते । भिक्षते । क्लेशते
चिक्लेशे । दक्षते । ददक्षे

दीक्षते । दिदीक्षे । ईक्षाञ्चक्रे
ईषाञ्चक्रे । भाषते । बभाषे
जिगेषे । पेषते । जेषते । नेषते
पेषाञ्चक्रे । पिप्रेषे । रेषते
हेषते । ह्रेषते । कासाञ्चक्रे
बभासे । नासते । प्रणासते[5]
नसते । भ्यसते । बभ्यसे
आशंसते । आशशंसे
जग्रसे । जग्लसे । ईहाञ्चक्रे
बंहते । बबंहे । मंहते
अंहते । आनंहे । जगर्हे
जगल्हे । पिप्लिहे
बबाहे । चकाशे । ऊहाञ्चक्रे
गाहते । जगाहे । जगाहिषे
जघाक्षे । जगाहिढ्वे-जगाहिध्वे
जघाढ्वे । गाहिता । गाढा[6]
गाहिष्यते । घाक्ष्यते
गाहिषीष्ट । घाक्षीष्ट
अगाहिष्ट-अगाढ[7] अघाक्षाताम्
अघाक्षत । आगाढाः । अघाढ्वम्
अघाक्षि । गर्हते । जगृहे
जगृहिषे[8] जघृक्षे । जघृढ्वे
गर्हिता । गर्ढा
गर्हिष्यते । घर्क्ष्यते
गर्हिषीष्ट । घृक्षीष्ट । अगर्हिष्ट
अघृक्षत[9]

---

१-'उपधायाश्च' (दीर्घः)। २-'धिन्विकृण्व्योर च'। ३-'लोपश्चास्यान्यतरस्यां म्वोः'। ४-'उतश्च प्रत्ययादसंयोगपूर्वात्'। ५-'उपसर्गादसमासेऽपि णोपदेशस्य' (णत्वम्)। ६-'ढो ढे लोपः'। ७-'झलो झलि'। ८-ऋदुपधेभ्यो लिटः कित्त्वं गुणात्पूर्वविप्रतिषेधेन'। ९-'शल-

अघृक्षाताम्[1] अघृक्षन्त
ग्लहते । घुंषते । जुघुंषे
घोषति । जुघोष । घोषिता
अघुषत् । अघोषीत्
अक्ष्णोति[2] अक्ष्णुतः । अक्ष्णुवन्ति
अक्षति । अक्षतः । अक्षन्ति
आनक्ष । आनक्षिथ । आनष्ठ
अक्षिता । अष्टा । अक्षिष्यति
अक्ष्यति[3] । आक्ष्णोतु । अक्ष्णुहि
अक्ष्णवानि । आक्ष्णोत्
आक्ष्णवम् । अक्ष्णुयात् । अक्ष्यात्
मा भवानक्षीत् अक्षिष्टाम् । अक्षिषुः
इडभावे तु मा भवानाक्षीत्
आष्टाम् । आक्षुः
तक्ष्णोति[4], तक्षति
ततक्षिथ । ततष्ठ । अतक्षीत्
अतक्षिष्टाम् । अताक्षीत् । अताष्टाम्
तनूकरणे किम्—
वाग्भिः सन्तक्षति
उक्षाञ्चकार । प्रणिक्षति । तृक्षति
स्तृक्षति नक्षति । तुत्वक्ष । चुचूष
भूषति । ऊषाञ्चकार चकाष । चखाष
शिशेष । शिशेषिथ
शेष्टा । अशिक्षत् । अशेक्ष्यत । जेषतुः
जझषतुः । शेषतुः । वव्रषतुः
मेषतुः । रोषिता[5] रोष्टा
रोषिष्यति । रेषिता । रेष्टा
रेषिष्यति । भषति । बभाष
ओषति । ओषाञ्चकार[6]
उवोष । ऊषतुः । उवोषिथ
जिजेष । विवेषिथ । विविषिव
वेष्टा । वेक्ष्यति । अविक्षत्
पोषति । पोषिता । पोषिष्यति
अपोषीत् । श्रेषति । शिश्रेष
श्रेषिता । श्लेषति । शिश्लेष
श्लेषिता । पुप्रोष । पुप्लोष
पर्षति । पपर्ष । पृष्यात्
तुतोस । जहास । जह्लास
रराস । घसति । घस्ता
घत्स्यति[7] घसतु । अघसत्
घसेत् । अघसत्[8]
पिपिसतुः । पिपेसतुः
अहसीत् । प्रणिशति । शवति
अशवीत् । अशावीत् । शशाश
शेशतुः । शेशुः । शेशिथ
शशसतुः । शशसुः । शशसिथ
शशंस । शस्यात् । अचहीत्
अमहीत् । रंहति । रंह्यात्
दर्हति । ददर्ह । दद्रहतुः । दृंहति
वर्हति । बृंहति । अबृहत्-
अबर्हीत् । तोहति । तुतोह
अतुहत् । अतोहीत् । दोहति
दुदोह । अदुहत् । अदोहीत्
ओहति । उवोह । ऊहतुः

———

इगुपधादनिटः क्सः' । १–'क्सस्याऽचि' । २–'अक्षोऽन्यतरस्याम्' (श्नुः) । ३–'स्कोः संयोगाद्योरन्ते च' 'षढोः कः सि' । ४–'तनूकरणे तक्षः' । ५–'तीष-सह-लुभ-रुष-रिषः' । ६–'उष-विद-जागृभ्योऽन्यतरस्याम्' । ७–'सः स्यार्धधातुके' । ८–'पुषादि-द्युताद्यॢदितः पर-

ओहिता । माऽभवानुहत्
औहीत् । आनर्ह

अथ कृपूपर्यन्ता अनुदात्तेतः

द्योतते । दिद्युते[1] दिद्युताते
द्योतिता । अद्युतत्[2] अद्योतिष्ट
श्वेतते । शिश्विते । अश्वितत्
अश्वेतिष्ट । मेदते । मिमिदे[3]
अमिदत् । अमेदिष्ट । क्ष्वेदते
चिक्ष्विदे । अक्ष्विदत् । अक्ष्वेदिष्ट
अक्ष्विदत् । अक्ष्वेदिष्ट
रोचते सूर्यः । हरये रोचते भक्तिः
अरुचत् । अरोचिष्ट । घोटते
जुघुटे । अघुटत् । अघोटिष्ट
अरुटत् । अरोटिष्ट । अनभत्
अनभिष्ट । अतुभत् । अतोभिष्ट
अस्रसत् । अस्रंसिष्ट । अस्रभत्
अस्रम्भिष्ट । वर्तते । ववृते

वर्त्स्यति[4] वर्तिष्यते । अवृतत्
अवर्तिष्ट । अवर्त्स्यत् । अवर्तिष्यत
स्यन्दते । सस्यन्दे । सस्यन्दिषे
सस्यन्त्से । सस्यन्दिध्वे । सस्यन्ध्वे
स्यन्दिता । स्यन्ता । स्यन्त्स्यति*
स्यन्दिष्यते । स्यन्त्स्यते
स्यन्दिषीष्ट । स्यन्त्सीष्ट । अस्यदत्
अस्यन्दिष्ट । अस्यन्त
अस्यन्त्साताम् । अस्यन्त्स्यत
अस्यन्त्स्यत् । अस्यन्दिष्यत
अस्यन्त्स्यत । अनुष्यन्दते[5]
अनुस्यन्दते वा जलम्
अप्राणिषु किम्
अनुस्यन्दते हस्ती
कल्पते । चक्लृपे[6]
चक्लृपिषे । चक्लृप्से
कल्प्तासि[7] कल्प्तास्थः

स्मैपदेषु' ( अङ् ) । १–'द्युति-स्वाप्योः संप्रसारणम्' । २–'द्युद्भ्यो लुङि' । ३–'मिदेर्गुणः' । ४–'वृद्भ्यः स्य-सनोः' 'न वृद्भ्यश्चतुर्भ्यः' । ५–'अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु' ( वा-पदम् ) । ६–'कृपो रो लः' । ७–'लुटि च क्लृपः' 'तासि-च क्लृपः' ।

* ननु "वृद्भ्यः स्यसनोः" इति परस्मैपदपक्षे परत्वादूदिल्लक्षणमिड्विकल्पं बाधित्वा "न वृद्भ्यश्चतुर्भ्यः" इति इण्निषेधे स्यन्त्स्यतीत्येव रूपमिष्यते, न तु स्यन्दिष्यति इति । तदयुक्तम्, अन्तरङ्गतया ऊदिल्लक्षणस्यैव इड्विकल्पस्य उचितत्वात् सकारादिविशेषापेक्षतया तज्ज्ञानाभावनिमित्तापेक्षतया च "न वृद्भ्यश्चतुर्भ्यः" इति निषेधस्य बहिरङ्गत्वादिति चेद्, न । "वृद्भ्यः स्यसनोः" इति परस्मैपदे कृते ऊदिल्लक्षणमन्तरङ्गमपि विकल्पं बाधित्वा "न वृद्भ्यश्चतुर्भ्यः" इति निषेधः, चतुर्ग्रहणसामर्थ्यात् । यदि ह्यत्र ऊदिल्लक्षण इड्विकल्प एव स्यात्, न तु "न वृद्भ्यश्चतुर्भ्यः" इति निषेधः, तर्हि चतुर्भ्यः इति व्यर्थं स्यात् । न च कृपूर्व्यावृत्तिस्तत्फलमिति शङ्क्यम्, "तासि च क्लृपः" इति चकारेण सकाराद्यार्धधातुकेऽपि नित्यमिण्निषेधप्रवृत्तेर्वक्ष्यमाणत्वात् । तथाच चतुर्ग्रहणं चतुर्णामपि सर्वत्र इण्निषेधार्थमिति दिक् ।

कल्पितासे । कल्प्तासे
कल्पस्यति । कल्पिष्यते
कल्प्स्यते । कल्पिषीष्ट । क्लृप्सीष्ट
अक्लृपत् । अकल्पिष्ट । अक्लृप्त
अकल्प्स्यत् । अकल्पिष्यत
अकल्प्स्यत

अथ त्वरत्यन्ताः १२

अनुदात्तेतः षितश्च

घटते । जघटे । घटयति
विघटयति । कथन्तर्हि—
'कमलवनोद्घाटनं कुर्वते ये' ।
'प्रविघाटयिता' *
व्यथते । विव्यथे[१]
पप्रथे । पप्रसे । अम्रक्षि । अम्राक्षि
दक्षं-दाक्षम् । दाक्षं-दाक्षम्

अथ फणान्ताः परस्मैपदिनः

ज्वरति । जज्वार । गडति
जगाड । हेडति । जिहेड
हिडयति । अहिडि-अहीडि
अनादरे तु—हेडयति
स्तकति । अकखीत् । चकाण
रराण । क्राथयति । अक्रथि-
अक्राथि । क्रथं-क्रथम्-
क्राथं क्राथम् । प्रवनयति
प्रज्वलयति । प्रह्वलयति । प्रह्मलयति
ह्मलन्तं प्रेरयति-ह्मलयति
भयादन्यत्र-दारयति
नारयति । अपयति
पाकादन्यत्र-आपयति
कथं विज्ञापना भर्तृषु सिद्धम् †

१—'व्यथो लिटि' ।

* ननु धातुपाठेऽर्थनिर्देशस्योपलक्षणत्वादर्थान्तरवृत्तेरपि घटधातोर्घटादिकार्यम्भवत्येव, अत एव घटयति विघटयतीत्यादावपि—संश्लेषयति विश्लेषयतीत्याद्यर्थेऽपि ह्रस्वः प्रवर्तते । एवञ्च विकसनार्थेऽपि उद्घाटनमित्यादिषु घटधातोर्णौ मित्वात् ह्रस्वः स्यादिति शङ्काकर्तुराशयः । समाधित्सोस्त्वयमाशयः—चुरादौ 'घट सङ्घाते' इति धात्वन्तरम्, तस्य णौ मित्वाभावादुपधाह्रस्वाभावे उद्घाटनं प्रविघाटयेत्यादिरूपम् । अर्थनिर्देशस्योपलक्षणतया सङ्घातादन्यत्र विकसनेऽपि तस्य वृत्तिरिति । न च चौरादिकस्य घट चेष्टायामित्यस्यैवार्थविशेषे मित्वार्थमनुवादोऽयमिति वाच्यम् । "नान्ये मितोऽहेतौ" इति निषेधात् । अहेतौ—स्वार्थे णिचि ज्ञपादिपञ्चकव्यतिरिक्ताश्चुरादयो मितो नेति तदर्थः ।

† अयम्भावः—घटादौ मित्त्वप्रकरणे "मारणतोषणनिशामनेषु ज्ञा" इति पठितम् । तत्र निशामनं चाक्षुषज्ञानम् इति माधवः । अन्ये तु ज्ञापनमात्रम् अर्थमाहुः । हरदत्तादयस्तु निशामन इत्यत्र निशानेष्विति पेठुः । निशानञ्च तीक्ष्णीकरणम् । एष्वेवार्थेषु मित्त्वं नान्यत्रेत्यनेन नियम्यते । विज्ञापनेत्यत्र तज्ज्ञापयतीत्यत्र च अचाक्षुषज्ञानस्यैवात्मज्ञानस्य विवक्षितत्वात् मित्त्वाभावान्माधवमते ह्रस्वो न प्रवर्तते । बोधनमात्रे तु उक्तं रूपद्वयं ज्ञा नियोगे इति चौरादिकस्य बोध्यम् । धातूनामनेकार्थत्वाच्च तस्य ज्ञापने वृत्तिः । "नान्ये मितोऽहेतौ" इति निषेधान्न

चलयति-शाखाम्
शीलं चालयति
सूत्रं चालयति
छदयति । अन्यत्र—छादयति
लडयति जिह्वाम् । डलयति जिह्वया
लडयति शत्रुम् । लडयति दधि
लाडयति पुत्रम्
मदयति । मादयति
ध्वनयति घण्टाम् । ध्वानयति
दलयति । वलयति । स्खलयति
त्रपयति । क्षपयति । स्नयति
स्वानयति । जारयति[1]
ज्वलयति[2] । ज्वालयति
प्रज्वलयति । कथन्तर्हि—
प्रज्वालयति, उन्नामयतीति ?
कथं सङ्क्रामयतीति ?
कामयते[3] आमयति । चामयति

निशामयति[4] रूपम्
अन्यत्र तु–'प्रणयिनो निशमय्य
वधू कथाः'
कथन्तर्हि–
'निशामय तदुत्पत्तिमि'त्यादि ?
आयामयति । यमयति
अवस्खादयति । परिस्खादयति
फेणतुः[5] फेणुः । फेणिथ । पफणतुः
पफणुः । फणयति । फाणयति
राजति । राजते । रेजतुः । रराजतुः
रेजे । रराजे । भ्रेजे* । बभ्राजे
भ्राश्यते । भ्राशते । भ्रेशे । बभ्राशे
भ्लाश्यते । भ्लाशते । भ्लेशे बभ्लाशे

स्यमादयः क्षरत्यन्याः परस्मैपदिनः
स्येमतुः । सस्यमतुः । अस्यमीत्
स्वेनतुः । सस्वनतुः । अस्वनीत्
अस्वानीत् । विष्वणति । अवष्वणति

१–'घटादयो मितः' 'जनी–जॄष्–क्नसु–रञ्जोऽमन्ताश्च' । २–'ज्वल–ह्वल–ह्मल–नमानामुपसंख्यानम्' । ३–'न कम्यमिचमाम्'† । ४–'शमो दर्शने' । ५–'फणां च सप्तानाम्' ।

मित्त्वम् । निशानेष्विति हरदत्तादीनां मते तु उक्तप्रयोगयाज्ञापनार्थत्वात् ज्ञापनस्य च मारणतोषणतीक्ष्णकरणान्यत्वात् तस्मिन्नर्थे शाधातोर्मित्त्वप्रसक्तिरेव नास्तीति दिक् ।

* भ्राज्धातोः फणादौ पाठः "फणाञ्च सप्तानाम्" इति सूत्रेण एत्वाभ्यासलोपार्थः । पूर्वं पाठस्तु "व्रश्चभ्रस्ज०" इति सूत्रेण प्राप्तस्य षत्वस्य निषेधार्थः । तत्र हि राज्धातुः फणादिर्गृह्यते, तत्साहचर्याच्च भ्राज्धातुरपि फणादिरेव ग्राह्यः, इति पूर्वपठितभ्राजधातुविषये षत्वाभावः सिद्ध्यतीति दिक् ।

† स्वामी "न कम्यमिचमाम्" इति सूत्रात् 'शमो दर्शने' इत्यादिगणसूत्रत्रये नञ्पदस्यानुवृत्तिं न करोतीति स्वामिमते—आयामयतीति उदाहरणे आयमयतीति स्यात् । यमयतीति प्रत्युदाहरणे यामयति ब्राह्मणानिति स्यात् । एवमवस्खादयति परिस्खादयतीत्युदाहरणे अवस्खदयति परिस्खदयतीति स्यात् । प्रत्युदाहरणे च प्रस्खादयतीति स्यात् । एवञ्च पर्यवसितं नियमयन्निति प्रयोगः साधुरेव । नञ्पदानुवृत्तौ तु यमोऽपरिवेषणे "स्खदिरवपरिभ्याञ्च" इति सूत्रद्वये उदाहरणप्रत्युदाहरणयोर्व्यत्यासः । इदं च स्वामिमतं वृत्तिन्यासादिविरोधाद्धेयमेव ।

दध्वनतुः । ससाम । तस्ताम
अज्वालीत् । पलति । बलति
बेलतुः । बेलुः । पोलति । कोलति
चुकोल । शशाल । जुहोल
पपात । पेततुः । पतिता । अपप्तत्[1]
प्रण्यपप्तत् । कथति । चकाथ
अकथीत् । अपथीत् । मेथतुः
अमथीत् । ववाम् । ववमतुः
भ्रम्यति । भ्रमति । भ्रेमतुः[2]
बभ्रतुः । अभ्रमीत् । अक्षारीत्

अथ द्वावनुदात्तेतौ

परिषहते । सेहे । सहिता
परिसोढा[3] पर्यषहत[3] पर्यसहत
रेमे । रेमिषे । रन्ता । रंस्यते
रंसीष्ट । अरंस्त

अथ कसन्ताः परस्मैपदिनः

सीदति[5] ससाद
सेदतुः । सेदिथ । ससत्थ
सत्ता । सत्स्यति । असदत्
निषीदति । न्यषीदत्
निषसाद[4] निषेदतुः
शीयते[7] शशाद । शेदतुः
शेदिथ । शशत्थ । शत्ता
अशदत् । क्रोशति । क्रोष्टा
अक्रुक्षत् । कोचति । चुकोच
बोधति । बोधिता । बोधिष्यति
रोहति । रुरोह । रुरोहिथ
रोढा । रोक्ष्यति । अरुक्षत्
अकासीत् । अकसीत्

अथ गूहत्यन्ताः स्वरितेतः

हिक्कति । हिक्कते
अञ्चति । अञ्चते
याचति । याचते
रेटति । रेटते । चचाते । चेते
अचचीत् । चचाद । चेदे
अचदीत् । पुप्रोथ । पुप्रोथे
मिमेद । मिमिदे । मिमेदे
मिमेथ । मेधति । मिमेधे
निनेद । निनिदतुः । निनिदे
नेनिदे । शर्धति । शर्धते
शर्धिता । मर्धति । मर्धते
बोधति । बोधते
अबुधत् । अबोधीत् । अबोधिष्ट
बुबुन्दे । अबुदत् । अबुन्दीत्
वेणति । वेणते । खनति । खनते
चख्नतुः[8] खायात्[9] खन्यात्
चिचीव । चिचीवे । अव्ययीत्
ददाश । ददाशे । भेषति । भेषते
असति । असते । आस । आसे
स्पशति । स्पशते

१—'पतः पुम्' । २—'वा-जॄ-भ्रमु-त्रसाम्' । ३—'सहिवहोरोदवर्णस्य' 'सोढः' । ४—'सिवादीनां वाऽड्व्यवायेऽपि' । ५—'पा-घ्रा-ध्मा-स्था-म्ना-दाण्-दृश्यर्ति-सर्ति-शद-सदां पिब-जिघ्र-धम-तिष्ठ-मन-यच्छ-पश्य-र्च्छ-धौ-शीय-सीदाः' । ६—'सदेः परस्य लिटि' । ७—'शदेः शितः' ८—'गम-हन-जन-खन-घसां लोपः क्ङित्यनङि' । ९—'ये विभाषा' ।

लष्यति । लषति । लेषे
चच्छ्रुषतुः । चच्छुषे । गूहति[1]
गूहते । गूहिता । गोढा । गूहिष्यति
घोक्ष्यति । गूहेत । गुह्यात्
अगूहीत् । अघुक्षत् । अगूढ[2]
अघुक्षत । अघुक्षाताम् । अघुक्षन्त
अगुह्वहि । अघुक्षावहि । अघुक्षामहि
अथाऽजन्ता उभयपदिनः
श्रयति । श्रयते । शिश्रियतुः
श्रयिता । अशिश्रियत्
भरति । बभार । बभ्रतुः
बभर्थ । बभृव । बभृषे । भर्ता
भरिष्यति[3] भ्रियात्[4]
भृषीष्ट[5] भृषीयास्ताम्
अभार्षीत् । अभार्ष्टाम् । अभार्षुः
अभृत[6] । अभृषाताम् । अभरिष्यत
जहर्थ । जह्रिव । जह्रिषे
हर्ता । हरिष्यति
धरति । अधार्षीत् । अधृत
निनयिथ । निनेथ । निन्यिषे
अथाऽजन्ताः परस्मैपदिनः
धयति । दधौ[7]
दधतुः[8] दधुः । दधिथ
दधाथ । दधिव । दधिम । धाता
धेयात्[9] धेयास्ताम् । धेयासुः
अदधत्[10] अदधताम्
अधात्[11] अधाताम् । अधुः
अधासीत्[12] अधासिष्टाम्
अधासिषुः । ग्लायतिम् । जग्लौ
जग्लिथ । जग्लाथ
ग्लायात्[13] ग्लेयात् । अग्लासीत्
म्लायति । स्त्यायति
स्नायति । जज्ञौ । सस्नौ
स्नाता । स्नायात् । अस्नासीत्
गेयात् । अगासीत्
पायात् । अपासीत्
स्तायति । स्नायति
दायति । दायात् । अदासीत्
पिबति । पेयात् । अपात्
जिघ्रति । घ्रायात् । घ्रेयात्
अघ्रासीत् । अघ्रात् । धमति
तिष्ठति । अधितष्ठौ
अधिष्ठाता । स्थेयात् । मनति
प्रणियच्छति । देयात् । अदात्
ह्वरति । जह्वार[14] जह्वरतुः
जह्वरुः । जह्वर्थ । ह्वर्ता
ह्वरिष्यति । ह्वर्यात्[15]
अह्वार्षीत् । अह्वार्ष्टाम्
सस्वरिथ । सस्वर्थ

१—ऊदुपधाया गोहः' । २—'लुग्वाः दुह—दिह—लिह—गुहामात्मनेपदे दन्त्ये' । ३—'ऋद्धनोः स्ये' । ४—'रिङ् शयग्लिङ्क्षु' । ५—'ऊश्च' । ६—'ह्रस्वादङ्गात्' । ७—'आदेच उपदेशेऽशिति' 'आत औ णलः' । ८—'आतो लोप इटि च' । ९—'दा—धा—घ्वदाप्' 'एर्लिङि' । १०—'विभाषा—धेट्—श्व्योः' । ११—'विभाषा—घ्रा—धेट्—शाच्छासः' । १२—'यम—रम—नमातां सक् च'' । १३—'वाऽन्यस्य संयोगादेः' । १४—ऋतश्च संयोगादेर्गुणः' । १५—'गुणोऽर्तिसंयोगाद्योः ।

सस्वरिव* । सस्वरिम
स्वरिष्यति । स्वर्यात्
अस्वारीत् । अस्वारिष्टाम्
अस्वार्षीत् । अस्वार्ष्टाम्
ससर्थ । सस्रिव । स्रियात्
असार्षीत् । असार्ष्टाम्
धावति । ऋच्छति
आर[1] आरतुः । आरुः
आरिथ[2] अर्ता । अरिष्यति
अर्यात् । आर्षीत् । आर्ष्टाम्
घरति । जघार । जघर्थ । जघ्रिव
घ्रियात् । अघार्षीत् । सुस्रोथ
सुस्रुव । स्रूयात् । असुस्रुवत्
सुषोथ । सुषविथ । सुषुविव
सोता । असावीत्[3] असौषीत्
शृणोति[4] शृणुतः । शृण्वन्ति[5]
शृणोमि । शृण्वः-शृणुवः
शृण्मः-शृणुमः

शुश्रोथ । शुश्रुव । शृणु
शृणवानि । शृणुयात् । श्रूयात्
अश्रौषीत् । द्रवति । दुद्रोथ-
दुद्रविथ । दुद्रुविव । दुद्रोथ
दुद्रुव । अदुद्रुवत् । शाशूयति
अथ ङीङन्ता ङितः
स्मयते । सिष्मिये
सिष्मियिढ्वे-सिष्मियिध्वे
गवते । जुगुवे
गाते । गाते । गाते । गे । जगे
गेत । गेयाताम् । गेरन् । गासीष्ट
अगास्त । कवते । चुकुवे
घवते । अवते । ऊवे । ओता
ओष्यते । ओषीष्ट । औष्ट
ङवते । जुङुवे । ङोता । रुरुवे
रवितासे । धरते । दध्रे
प्रणिमयते† । दयते

१–'ऋच्छत्यृताम्' । २–'इडत्त्यर्तिव्ययतीनाम्' । ३–'स्तु–सु–धूञ्भ्यः परस्मैपदेषु' । ४–'श्रुवः शृ च' । ५–'हु–श्नुवोः सार्वधातुके' ।

* "आर्धधातुकस्येड्वलादेः" इत्यादिविधिशास्त्रेभ्यः प्राक् "नेड्वशि कृति" "श्र्युकः किति" इत्यादिसूत्राणां प्रकरणमाचार्येण कृतमिति तत्सामर्थ्येन परमपि "स्वरतिसूति०" इत्यादिसूत्रं बाधित्वा "श्र्युकः किति" इति निषेधः प्राप्तस्तमपि बाधित्वा क्रादिनियमान्नित्यमिट् भवतीति दिक् ।

† ननु प्रणिमयत इत्यत्र 'नेर्गदनद०" इति णत्वं न सम्भवति, शिद्विषये आत्वाभावेन माङ्रूपाभावात् । तथा प्रणिमानशब्देऽपि णत्व न सम्भवति, तत्र मेङः कृतात्वस्य लाक्षणिकमाङ्रूपत्वात् । "गामादाग्रहणेष्वविशेषः" इत्याश्रित्य मेङोऽपि कृतात्वस्य णत्वविधौ ग्रहणे तु मीनातिमिनोत्योरात्वे प्रनिमाता प्रनिमास्यति इत्यत्रापि नेर्णत्वापत्तिरिति चेद् ? उच्यते । "नेर्गदनद०" इति णत्वविधौ घुमेत्यस्य स्थाने घुप्रकृतिमाङिति पठित्वा तत्र प्रकृतिशब्दस्य घुमाङ्प्रकृतिपरत्वमाश्रित्य घौ माङ्धातौ घुमाङ्कृतौ च परतः इति पर्यवसानमाश्रित्य माप्र-

दिग्ये[1] अदित[2] अदिथाः
अदिषि । श्यायते । शश्ये । प्यायते
पप्ये । प्याता । त्रायते । तत्रे
पवते । पुपुवे । पविता । मवते
डयते । डिड्ये । डयिता
तरति[3] तेरतुः । तेरुः
तरिता । तरीता[4]
अलिटि किम्-तेरिथ
तीर्यात्[5] अतारिष्टाम्[6]
अथाऽष्टावनुदात्तेतः
जुगुप्सते । जुगुप्सांचक्रे
तितिक्षते । मीमांसते । बीभत्सते
आरभते । आरेभे । रब्धा
रप्स्यते । लभते । स्वजते[7]
परिष्वजते

देभतुः-सस्वजे परिषस्वजे[8]
परिषस्वजे । सस्वञ्जिषे
सस्वञ्जिषे । स्वङ्क्ता
स्वज्यते । स्वजेत । स्वङ्क्षीष्ट
प्रत्यष्वङ्क्त । पर्यष्वङ्क्त । पर्यस्वङ्क्त
ह्रदते । जह्रदे । ह्रत्ता । ह्रत्स्यते
ह्रदेत । ह्रत्सीष्ट । अह्रत्त
अथ परस्मैपदिनः
चस्कन्दिथ । चिस्कन्त्थ । स्कन्ता
स्कन्त्स्यति । स्कद्यात् । अस्कदत्
अस्कान्त्सीत् । अस्कान्ताम्
अस्कान्त्सुः । विष्कन्ता-
विस्कन्ता[9] । विष्कन्नः
परिष्कन्दति[10] परिस्कन्दति
परिष्कण्णः* परिस्कन्नः

---

१–'दयतेर्दिगि लिटि' । २–'स्थाध्वोरिच्च' । ३–'ऋत इद्धातोः' 'इत्वोत्वाभ्यां गुण–वृद्धी पूर्वविप्रतिषेधेन' । ४–'वृतो वा' । ५–'हलि च । ६–'सिचि च परस्मैपदेषु' । ७–'दंश–सञ्ज–स्वञ्जां शपि' 'रञ्जेश्च' । ८–'स्वञ्जेरुपसङ्ख्यानम्' । ९–'वेः स्कन्देरनिष्ठायाम्' । १०–'परेश्च' ।

---

कृतेङिति मेङ्धातोः कृतात्वस्यापि ग्रहणस्य भाष्यकृता अभ्युपगतत्वात् । एवञ्च प्रणिमयते इत्यत्र नाव्याप्तिः, मेङः कृतात्वमाप्रकृतित्वे सति ङित्वात् । नापि मीनातिमिनोत्योरात्वे प्रनिमाता प्रनिमास्यतीत्यत्र अतिव्याप्तिः, माङ्रूपस्य ङित्वाभावात् । एतच्च घुसंज्ञासूत्रे भाष्ये स्थितम् ।

* 'परिष्कन्दत्' इति स्थिते "अनिदिताम्" इति नलोपे "रदाभ्याम्" इति निष्ठातकारस्य तत्पूर्वदकारस्य च नत्वे 'परेश्च' इत्यनेन सस्य षत्वपक्षे प्रथमनकारस्य रेफापेक्षया भिन्नपदस्थत्वेऽपि षात् परत्वात् णत्वे द्वितीयनकारस्य ष्टुत्वेन णत्वे 'परिष्कण्णः' इति रूपम् । ननु दकारस्थानिकनकारस्य षकारनिमित्तकं णत्वमन्तरङ्गम्, निमित्तनिमित्तिनोरेकपदस्थत्वात् । षत्वं तु परि इत्युपसर्गात्मकपदान्तरस्थमिणं निमित्तीकृत्य प्रवर्तमानं बहिरङ्गम् । ततश्च णत्वे कर्तव्ये बहिरङ्गस्य षत्वस्यासिद्धत्वात् षात्परत्वाभावात् कथं णत्वमिति चेद् ? उच्यते । पदद्वयाश्रयतया बहिरङ्गस्य षत्वस्यासिद्धत्वं यत्प्रसक्तं तन्नाश्रीयते । "धातूपसर्गयोः कार्यमन्तरङ्गम्' इत्यभ्युपगमात् । पूर्वं धातुरुपसर्गेण सह युज्यते-सन्ध्यादिकार्यं लभते । पश्चात्-धातूपसर्गकार्यप्रवृत्त्यनन्तरं साधनेन युज्यते । पूर्वं धातुः साधनेन युज्यते, पश्चादुपसर्गेण इति पक्षे तु षत्वस्य बहिरङ्गतया असिद्धत्वान्न णत्वमिति यावत् ।

येभिथ । ययब्ध । यब्धा
यप्स्यति । अयाप्सीत्
नेमिथ । ननन्थ । नन्ता
अनंसीत् । अनंसिष्टाम्
गच्छति[1] । जगाम । जग्मतुः
जग्मुः । जगमिथ । जगन्थ
गन्ता । गमिष्यति[2] अगमत्
सर्पति । ससर्प । स्रप्ता[3] सर्प्ता
स्रप्स्यति । सर्प्स्यति । असृपत्
यच्छति । येमिथ । ययन्थ । यन्ता
अयंसीत् । अयंसिष्टाम् । तप्ता
अताप्सीत् । निष्टपति[4]
तत्यजिथ । तत्यक्थ । त्यक्ता
अत्याक्षीत् । सजति । सङ्क्ता
पश्यति । दद्रष्ठ[5] ददर्शिथ
द्रष्टा । द्रक्ष्यति । दृश्यात्
अदर्शत्[6] अद्राक्षीत्[7]
दशति । ददंशिथ
ददंष्ठ । दंष्टा । दङ्क्ष्यति । दश्यात्
अदाङ्क्षीत् । क्रष्टा । कर्ष्टा
क्रक्ष्यति । कर्क्ष्यति
अक्राक्षीत्[8] अक्राष्टाम्
अकार्क्षीत् । अकार्ष्टाम् । अकार्क्षुः
अकृक्षत् । अकृक्षताम् । अकृक्षन्
देहिथ । ददग्ध । दग्धा । धक्ष्यति

अधाक्षीत् । अदाग्धाम् । अधाक्षुः
मिमेह । मिमेहिथ । मेढा
मेक्ष्यति । अमिक्षत्
चिकित्सति । केतयति
इतो वहत्यन्ताः स्वरितेतः
दीदांसति । दीदांसते
शीशांसति । शीशांसते
अन्यत्र-दानयति । शानयति
पचति । पचते । पेचिथ
पपक्थ । पेचे । पक्ता । पक्षीष्ट
भजति । भजते । बभाज । भेजतुः
भेजुः । भेजिथ । बभक्थ । भक्ता
भक्ष्यति । भक्ष्यते
अभाक्षीत् । अभक्त
रजति । रजते
अराङ्क्षीत् । अरङ्क्त
शशाप । शेपे । अशाप्सीत् अशप्त
त्वेषति । त्वेषते । तित्विषे
त्वेक्ष्यति । त्विक्षीष्ट । अत्विक्षत
अत्विक्षाताम् । यजति । यजते
इयाज[9] ईजतुः[10] ईजुः
इयजिथ । इयष्ठ । ईजे । यष्टा
यक्ष्यति । इज्यात् । यक्षीष्ट
अयाक्षीत् । अयष्ट । वपति उवाप
ऊपे । वप्ता । उप्यात् । वप्सीष्ट

---

१—'इषु-गमि-यमां छः' । २—'गमेरिट् परस्मैपदेषु' । ३—'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' । ४—'निसस्तपतावनासेवने' । ५—'विभाषा सृजिदृशोः' 'सृजिदृशोर्झल्यमकिति' । ६—'ऋदृशोऽङि गुणः' । ७—'न दृशः' । ८—'स्पृश-मृश-कृष-तृप-दृपां-च्लेः सिज्वा वाच्यः' । ९—'लिट्यभ्यासस्योभयेषाम्' । १०—'वचि-स्वपि-यजादीनां किति' ।

अव्यवाक्षीत् । अवक्ष । उवाह
उवहिथ । उवोढ । ऊहे
वोढा । वक्ष्यति । अवाक्षीत्
अवोढाम् । अवाक्षुः । अवोढ
अवक्षाताम् । अवक्षत
अवोढाः । अवोढ्वम्
वसति । उवास । ऊषतुः[1] ऊषुः
उवसिथ । उवस्थ । वस्ता
वत्स्यति[2] उष्यात् । अवात्सीत्
अवात्ताम् । वयति । वयते
उवाय[3] ऊयतुः[4] ऊयुः
ऊवतुः[5] ऊवुः । उवयिथ
ऊये । ऊवे । ववौ[6] ववतुः । ववुः
वविथ । ववाथ । ववे । वाता
ऊयात् । वासीष्ट । अवासीत्
व्ययति । विव्याय*
विव्यतुः विव्युः
विव्ययिथ[7] । विव्याय । विव्यथ
विव्ये । व्याता । वीयात् । व्यासीष्ट
अव्यासीत् । अव्यास्त । जुहाव[8]
जुहुवतुः । जुहुवुः । जुहविथ-जुहोथ
जुहुवे । ह्वाता । हूयात् । ह्वासीष्ट
अह्वत्[9] अह्वताम् । अह्वन्
अह्वत । अह्वास्त

अथ द्वौ परस्मैपदिनौ

वदति । उवाद । ऊदतुः । उवदिथ
वदिता । उद्यात् । अवादीत्
श्वयति । शुशाव[10] । शुशुवतुः
शिश्वाय[11] । शिश्वियतुः
श्वयिता । श्वयेत् । शूयात्
अश्वत्[12] अश्वताम् । अश्वन्
अशिश्वियत्[13] अश्वयीत्[14]
चुलुम्पति ऋतीयते[15]
ऋतीयाञ्चक्रे[16] । आनर्त[17]
अर्तिष्यति । आर्तीत्

इति भ्वादिप्रयोगाः ।

१—'शासि-वसि-घसीनां च' । २—'सः स्यार्धधातुके' । ३—'वेञो वयिः' । ४—'लिटि वयो यः' । ५—'वश्चास्यान्यतरस्यां किति' । ६—'वेञः' । ७—'इडत्त्यर्तिव्ययतीनाम्' । ८—'अभ्यस्तस्य च' । ९—'लिपि-सिचि-ह्वश्च' 'आत्मनेपदेष्वन्यतरस्याम्' 'अतो लोपः' । १०—'विभाषा श्वेः' । ११—'श्वयतेर्लिट्यभ्यासलक्षणप्रतिषेधः' । १२—'जॄ-स्तम्भु-म्रुचु-म्लुचु-ग्रुचु-ग्लुचु-ग्लुञ्चु-श्विभ्यश्च' । 'श्वयतेरः' । १३—'विभाषा धेट्श्व्योः' । १४—'ह्म्यन्त-क्षण-श्वस-जागृ-णि-श्व्येदिताम्' । १५—'ऋतेरीयङ्' । १६—'आयादय आर्धधातुके वा' १७—'तस्मान्नुड् द्विहलः' । इति भ्वादयः

* व्येञ् धातोर्लिटि आत्वन्तु न, 'न व्यो लिटि' इति निषेधात् । ततश्च तिपि णलि "अचो ञ्णिति" इति वृद्धौ 'व्यै अ' इति स्थिते द्वित्वे "लिट्यभ्यासस्य" इत्यभ्यासे यकारस्य सम्प्रसारणे पूर्वरूपे उत्तरखण्डस्य आयादेशे 'विव्याय' इति । ननु सम्प्रसारणात्प्राक् परत्वात् हलादिशेषेण यकारस्य निवृत्तौ वकारस्य सम्प्रसारणे उकारे सति 'उव्याय' इत्यापत्तेरिति चेद् ? न । परमपि हलादिशेषं बाधित्वा यस्य सम्प्रसारणम्, उभयेषां ग्रहणसामर्थ्यात् । अन्यथा वच्यादीनां ग्रहादीनाञ्चानुपूर्व्यैव सिद्धे किन्तेन ।

# अथ अदादिप्रयोगाः ।

अत्ति[1] अत्तः । अदन्ति
जघास[2] । जक्षतुः*
जक्षुः जघसिथ
आद । आदतुः । आदिथ[3]
अत्ता । अत्स्यति । अद्धि[4]
अत्तात् । अदानि
आदत्[5] आत्ताम् । आदन्
आदः । आत्तम् । आत्त
आदम् । आद्व । आद्म
अद्यात् । अद्याताम् । अद्युः
अद्यास्ताम् । अद्यासुः
अघसत्[6] प्रणिहन्ति ।
हतः[7] । घ्नन्ति
प्रहण्मि[8] प्रहन्मि । प्रहण्वः । प्रहन्वः
जघान[9] जघ्नतुः । जघ्नुः[10]
जघनिथ । जघन्थ
हन्ता । हनिष्यति[11]

हन्तु । हतात् । घ्नन्तु । जहि[12]
हनानि । हनाव । हनाम
अहन् । अहताम् । अघ्नन्
अहनम् । वध्यात्[13] वध्यास्ताम्
आर्धधातुके किम्-हन्यात्
प्रहण्यात्[14] अवधीत्[15]
अथ चत्वारः स्वरितेतः
द्वेष्टि । द्विष्टे । द्वेष्टा
द्वेक्ष्यति । द्वेक्ष्यते
द्वेष्टु । द्विष्टात् । द्विड्ढि
द्वेषाणि । द्वेषै । द्वेषावहै । अद्वेट्
अद्विषुः[16] । अद्विषन् । अद्वेषम्
द्विष्यात् । द्विषीत । द्विक्षीष्ट
अद्विक्षत् । दोग्धि । दुग्धः । धोक्षि
दुग्धे । धुक्षे । धुग्ध्वे
दोग्धु । दुग्धि । दोहानि
धुक्ष्व । धुग्ध्वम् । दोहै

---

१–'अदिप्रभृतिभ्यः शपः' इति शपो लुकि, चर्त्वे तत्सिद्धिः । २–'लिट्यन्यतरस्याम्' । ३–'इडत्त्यर्तिव्ययतीनाम्' । ४–'हुझल्भ्यो हेर्धिः' । ५–'अदः सर्वेषाम्' इत्यडागमः । ६–'लुङ्सनोर्घस्लृ' इति घस्लादेशः, लृदित्वात् 'पुषादिद्युताद्यॢदितः परस्मैपदेषु' इत्यङ् । ७–'अनुदात्तोपदेश-वनति-तनोत्यादीनामनुनासिकलोपो झलि क्ङिति' इति नकारलोपः । ८–अत्र 'वमोर्वा' इति वा णत्वम् । ९–'हो हन्तेर्ञ्णिन्नेषु' । १०–'अभ्यासाच्च' कुत्वम् । ११–'ऋद्धनोः स्ये' इतीट् । १२–'हन्तेर्जः' । १३–'हनो वध लिङि' । १४–'हन्ते' णत्वम् । १५–'लुङि च' अल्लोपस्य स्थानिवत्त्वात् 'अतो हलादेर्लघोः' इति न वृद्धिः । १६–'द्विषश्च' ।

---

* ननु 'जघस् अतुस्' इति स्थितौ "गमहनजनखनघसाम्" इत्युपधालोपे तस्य "अचः परस्मिन् पूर्वविधौ" इति स्थानिवत्त्वेन व्यवधानात् खरपरत्वाऽभावाच्चर्त्वाऽप्राप्त्या जक्षतुरिति न सिद्ध्येदिति चेद् ? उच्यते। "न पदान्तद्विर्वचन०" इति सूत्रेण चर्त्वं प्रति स्थानिवत्त्वनिषेधात् सर्वमुपपन्नमिति यावत् ।

अधोक् । अदोहम् । अदुग्ध
अधुग्ध्वम् । अधुक्षत् । अधुक्षत
प्रणिदेग्धि । लेढि । लीढः । लिहन्ति
लेक्षि । लीढे । लिक्षे । लीढ्वे
लेढु । लीढि । लेहानि । अलेट्
अलिक्षत् । अलिक्षत । अलीढ
अलिक्षावहि । अलिह्वहि
'विचक्षणः प्रथयन्०' । तेन 'स्फायन्निर्मोक-सन्धी'त्यादि सिध्यति
चष्टे* चक्षाते । चख्यौ[1] चख्ये
चक्शौ । चक्शे । चचक्षे
ख्याता । क्शाता । ख्यास्यति
ख्यास्यते । क्शास्यति । क्शास्यते

अचष्ट । चक्षीत । ख्यायात्
ख्येयात् । क्शायात । क्शेयात्
अख्यत्[2] अख्यत । अक्शासीत्
अक्शास्त । समचक्षिष्ट[3]
अथ पृच्छ्यन्ता अनुदात्तेतः
ईर्ते । ईराञ्चक्रे । ईरिता । ईर्ताम्
ईर्ष्व । ईर्ध्वम् । ऐरिष्ट । ईट्टे
ईडिषे[4] ईडिध्वे । ईडिष्व
ईडिध्वम् । ऐड्ढ्वम्
ईष्टे । ईशिषे । ईशिध्वे
आस्ते । आसाञ्चक्रे[5]
आस्स्व । आध्वम् आसिष्ट
आशास्ते । आशासाते

---

१—'चक्षिङः ख्याञ्' 'वा लिटि' अत्र भाष्ये क्शादिरयमादेशः।† असिद्धकाण्डे 'शस्य यो वे'ति स्थितम् । २—'अस्यति-वक्ति-ख्यातिभ्योऽङ्' । ३—'वर्जने क्शाञ् नेष्टः' । ४—'ईशः से' ईडजनोर्ध्वे च । ५—'दयायासश्च' ।

---

* ननु चक्षिङ् इत्यत्र इकारोच्चारणं व्यर्थम् । न च सुखोच्चारणार्थं तदिति वाच्यम्, अकारोच्चारणेनैव तत्सिद्धेः। नाप्यनुदात्तेत्वप्रयुक्तात्मनेपदार्थं तदिति शक्यं वक्तुम्, ङित्वादेव तत्सिद्धेरिति चेद् ? न "अनुदात्तेतश्च हलादेः" इति ल्युडपवादयुच्प्रत्ययार्थत्वात् । ततश्च 'विचक्षणः' इति प्रयोगः सिद्ध्यति, नुम् तु न भवति । यत्र धातौ इकारोऽन्तावयवो भवति, तत्रैव "इदितो नुम् धातोः" इत्यनेन नुम्भवतीति व्याख्यानात् । एवञ्च इकारस्यानुदात्तत्वात् "अनुदात्तङित आत्मनेपदम्" इत्यनेनानुदात्तेत्निमित्तके आत्मनेपदे सिद्धे ङकारोपादानं व्यर्थमेव । तदेव व्यर्थं सत् 'अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम्' इति ज्ञापयति । तेन स्फायन्निति प्रयोगे शतृप्रत्ययस्य सिद्धिरिति दिक् ।

† अत्रेदं तात्पर्यम्—'चक्षिङः ख्याञ्' इत्यनेन न चक्षिङः ख्याञादेशः, किन्तु क्शाञादेश एव, तेन पुंख्यानमित्यत्र न "पुमः खय्यम्परे" इति रुत्वमित्यादि हल्सन्धावेवोक्तम् । असिद्धकाण्डे "शस्य यो वा" इति स्थितम् इति तेन णत्वप्रकरणानन्तरमिति शेषः । अत एव ककारेण व्यवधानान्न "कृत्यचः" इत्यनेन पर्याख्यानमित्यत्र णत्वम् । नापि सुप्रख्येन निर्वृत्तं सौप्रख्यम्, तत्र भवः सौप्रख्यीयः इत्यत्र यत्वासिद्धत्वेन "धन्वयोपधाद्" इति वुञ्, किन्तु छप्रत्यय एवेति ।

तेन—'नमोवाकं प्रशास्महे'
वस्ते । वस्से । वध्वे
ववसे । वसिता
कंस्ते । कंसाते । कंसते
कस्ते । कष्टे । कशाते
कक्षे । कड्ढ्वे
निंस्ते । निङ्क्ते । निङ्क्ते
निंसिता । शिङ्क्ते । पिङ्क्ते
पृङ्क्ते । वृक्ते । वृजाते । वृञ्जते
पृङ्क्ते । पृक्ते । सूते । सुषुवे
सोता । सविता । सुषुवे[1]
सविषीष्ट
असविष्ट । असोष्ट
शेते[2] शयाते । शेरते[3]
शेषे । शयाथे । शेध्वे
शये । शेवहे । शेमहे
शिश्ये । शयिता । अशयिष्ट
अथ स्तौत्यन्ताः परस्मैपदिनः
यौति[4] युतः । युवन्ति । युयाव
यविता । युयात्* यूयात् अयावीत्
रवीति[5] रौति । रुवीतः । रुतः

हलादेः किम्-रुवन्ति
तिङः किम्-शाम्यति
सार्वधातुके किम्-रूयात्
रुयात्-रुवीयात्
अरावीत् । अरविष्यत्
तवीति । तौति । तुवीतः । तुतः
तोता । तोष्यति । नौति । नविता
क्षौति । क्षविता । क्ष्णौति । क्ष्णविता
स्नौति । सुष्णाव । स्नविता
स्नूयात् । ऊर्णौति[6]
ऊर्णोति । ऊर्णुतः । ऊर्णुवन्ति
ऊर्णुते । ऊर्णुवाते । ऊर्णुवते
ऊर्णुनाव[7] ऊर्णुनुवतुः । ऊर्णुनुवुः
ऊर्णुनुविथ[8] ऊर्णुनविथ
ऊर्णुविता । ऊर्णविता
ऊर्णौतु । ऊर्णोतु । ऊर्णवानि
ऊर्णवै । और्णोत्[9] और्णोः
ऊर्णुयात् । ऊर्णुयाः । ऊर्णूयात्
ऊर्णविषीष्ट । ऊर्णुविषीष्ट
और्णुवीत् । और्णुविष्टाम्
और्णावीत्[10] और्णाविष्टाम्

---

१–'भू-सुवोस्तिङि'। २–'शीङः सार्वधातुके गुणः'। ३–'शीङो रुट्'। ४–'उतो वृद्धिर्लुकि हलि'। ५–'तु-रु-स्तु-शम्यमः सार्वधातुके' इतीड्वा। ६–'ऊर्णोतेर्विभाषा'। ७–'ऊर्णोतेराम् नेति वाच्यम्' 'न न्द्राः संयोगादयः' 'पूर्वत्रासिद्धीयमद्विर्वचने' इति त्वनित्यम्, 'उभौ साऽभ्यासस्ये' ति लिङ्गात्। ८–'विभाषोर्णोः'। ९–'गुणोऽपृक्ते'। १०–'ऊर्णोतेर्विभाषा'।

---

* ननु लिङ्स्थानिकादेशस्य तिपः पित्वात्तस्य च "यदागम"परिभाषया यासुड्विशिष्टे सत्वात्तस्मिन् "उतो वृद्धिर्लुकि" इत्यनेन वृद्धिर्दुर्वारेत्यत उच्यते—इह उतो वृद्धिर्न, भाष्ये 'पिच्च ङिन्न ङिच्च पिन्न' इति व्याख्यानात्। "सार्वधातुकमपित्" इत्यस्यावृत्याऽस्य लाभः। न च पूर्ववाक्येन ङित्वमपि दुर्लभमिति वाच्यम्। विशेषविहितेन ङित्वेन पित्वस्य बाधात्।

और्णाविषुः । और्णावीत्
यौति । योता । सोता । असौषीत्
कोता । स्तौति । स्तवीति
स्तुतः । स्तुवीतः । स्तुते । स्तुवीते
अस्तावीत् । अभ्यष्टौत्[1]
पर्यष्टौत्[2] पर्यस्तौत्
आह[3] आहतुः । आहुः
आत्थ[4] आहथुः
ब्रवीति[5] ब्रूतः । ब्रुवन्ति । ब्रूते
उवाच[6] ऊचतुः । ऊचुः
उवचिथ । उवक्थ । ऊचे । वक्ता
ब्रवीतु । ब्रूतात् । ब्रवाणि । ब्रवै
ब्रूयात् । उच्यात्
अवोचत्[7] अवोचत
अथ शास्यन्ताः परस्मैपदिनः
एति । इतः । यन्ति[8]

इयाय । ईयतुः[9] । ईयुः
इययिथ । इयेथ
एता । इतात् । इहि । अयानि
ऐत् । ऐताम् । आयन्
इयात् । ईयात् । निरियात्[10]
अभीयात्*
अणः किम्? समेयात्
'समीयात्' इति तु भौवादिकस्य
अगात्[11] अगाताम् । अगुः
अधीते । अधीयाते । अधीयते
अधिजगे[12] अधिजगाते
अधिजगिरे । अध्येता । अध्येष्यते
अध्ययै[13] अध्यैत । अध्यैयाताम्
अध्यैयि । अध्यैवहि । अधीयीत
अधीयीयाताम् । अधीयीध्वम्
अधीयीय । अध्येषीष्ट

१–'प्राक्सितादड्व्यवायेऽपि'। २–'सिवादीनां वाऽड्व्यवायेऽपि'। ३–'ब्रुवः पञ्चानामादित आहो ब्रुवः'। ४–'आहस्थः''। ५–'ब्रुव ईट्'। ६–'ब्रुवो वचिः'। ७–'अस्यति–वक्ति–ख्यातिभ्योऽङ्'। 'वच उम्''। ८–इणो यण्'। ९–दीर्घ इणः किति''। १०–'एतेर्लिङि'। ११–'इणो गा लुङि'। सिचो लुक्। १२–'गाङ् लिटि'। १३–गुणाऽयादेशयोः कृतयोरुपसर्गस्य यण्†

* ननु पूर्वान्तवद्भावेनोपसर्गत्वं परादिवद्भावेन च धातुत्वं वर्तत एवेति "एतेर्लिङि" इत्यनेनोपसर्गात्परस्येणोऽणो ह्रस्वविधानात् 'अभीयात्' इत्यत्रापि ह्रस्वो दुर्वार इति चेत्? न "उभयत आश्रयणे नान्तादिवत्" इति वचनेन निषेधात्। यथा द्वयोरेकः प्रेष्यस्ताभ्यां युगपद्भिन्नदेशकार्ये प्रेरितोऽविरोधार्थी न कस्यापि करोति कार्यन्तद्वत् पूर्वपरशब्दाभ्यामन्तादिशब्दाभ्याञ्च विरोधस्य स्फुटत्वाद्विरुद्धातिदेशस्य युगपदसम्भव इति तात्पर्यम्। नैतद्विषये स्थानिवद्भावप्रवृत्तिः, आनुमानिकस्थान्यादेशभावे विशिष्टस्य स्थानित्वेऽपि प्रत्येकं तयोः स्थानित्वे मानाभावात् वर्णयोरेव श्रौतस्थान्यादेशभावविधानाच्चेति।

† ननु पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेनेत्यभियुक्तोक्त्या अन्तरङ्गत्वाद्गुणादेः प्रागेव सवर्णदीर्घे यणि 'अध्ययै' इति न स्यादिति चेत्, उच्यते। 'पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण' इति पक्षस्य "सुट्कात्पूर्वः" इत्यत्र भाष्ये सिद्धान्तितत्वात् पूर्वं गुणायादेशयोः कृतयो-

अध्यगीष्ट[1] अध्यैष्ट
अध्यगीष्यत । अध्यैष्यत
अधियन्ति[2] अध्यगात्
'ससीतयोराघवयोरधीयन्'
वेति । वीतः । वियन्ति
वेषि । वेमि । वीहि । अवेत्
अवीताम् । अवियन् । अव्यन्[3]
एति । इतः । इयन्ति
ईयात् । ऐषीत्
अभियाति । यातः । यान्ति
अयुः[4] अयान् । यायात्
यायाताम् । यायास्ताम्
पायास्ताम् । अपासीत्
प्रणिदाति । प्रनिदाति

दायास्ताम् । अदासीत्
( ख्या* प्रकथने )
'तनौ ममुस्तत्र न कैटभद्विषः'
'उदरं परिमाति मुष्टिना'
प्रणिमाति-प्रनिमाति
वक्ति । वक्तः । वग्धि
वच्यात् । उच्यात् । अवोचत्
वेद[5] विदतुः । विदुः
वेत्थ । विदथुः । विद
वेद । विद्व । विद्म
वेत्ति । वित्तः । विवेद । विविदतुः
विदाञ्चकार । वेदिता
तेन-'न विश्वसेदविश्वस्तमित्यादि'
विदाङ्करोतु[6]

---

१-'विभाषा लुङ् लृङोः' 'गाङ्कुटादिभ्योऽञ्णिन्ङित्' 'घु-मा-स्था-गा-पा-जहाति-सां हलि'। २-'इण्वदिक इति वक्तव्यम्'। ३-अडागमे सत्यनेकाच्त्वाद्यणिति केचित्। ४-'लङः शाकटायनस्यैव''। ५-'विदो लटो वा'। ६-'विदाङ्कुर्वन्त्वित्यन्यतरस्याम्' 'तनादिकृञ्भ्य उः'।

---

रुपसर्गस्य यण्। पूर्वं धातुरुपसर्गेण युज्यते' इति मते तु धातूपसर्गयोः कार्यं पूर्वं स्यादिति अन्तरङ्गत्वात्प्राप्तो दीर्घो "णेरध्ययने वृत्तम्" इति सूत्रे 'अध्ययने' इति पदनिर्देशान्न भवति। यदि पूर्वं दीर्घः स्यात्तदोक्तप्रयोगनिर्देशोऽनुपपन्नः स्यात्।

* "अयं सार्वधातुकमात्रविषयः" अस्य ख्याधातोः सार्वधातुक एव प्रयोगो न त्वार्धधातुके इत्यर्थः। अत्र च 'सस्थानत्वं नमः ख्यात्रे' इति वार्तिकं नञमध्याहृत्य 'नमः ख्यात्रे' इत्यत्र सस्थानत्वं जिह्वामूलीयत्वं न भवतीति व्याख्यानरूपं भाष्यञ्च प्रमाणम्। अत्र हि चक्षिङः ख्शाञादेशे शस्य यकारे शकारस्थानिकयत्वस्यासिद्धत्वात् "शर्परे विसर्जनीयः" इति इष्टो विसर्जनीयः सिध्यति, जिह्वामूलीयस्त्वनिष्टो न भवतीति भाष्यवार्तिकहृदयम्। अस्य ख्याधातोरार्धधातुकेऽपि प्रयोगसत्त्वे तु तृजन्ते ख्यातृशब्दे यकारस्य शकारस्थानिकत्वाभावात् असिद्धत्वाभावेन "शर्परे विसर्जनीयः" इत्यस्याप्रवृत्तौ "कुप्वोः" इति जिह्वामूलीयो दुर्वारः स्यात्। तदत्रार्धधातुके ख्याधातोर्न प्रयोगः इति विज्ञाप्यते। ज्ञापकस्य सामान्यापेक्षत्वादिति दिक्।

विदाङ्कुरुतात्[1]
विदाङ्कुरुताम्। विदाङ्कुरु
विदाङ्करवाणि
अवेत्। अवित्ताम्। अविदुः
अवेः[2] अवेत्
( अस्ति ) स्तः[3] सन्ति
असि। स्थः। स्थ
अस्मि। स्वः। स्मः
बभूव[4] भविता
अस्तु–स्तात्। स्ताम्। सन्तु
एधि[5] स्तात्। स्तम्। स्त
असानि। असाव। असाम
आसीत्। आस्ताम्। आसन्
स्यात्। भूयात्। अभूत्
निष्यात्। प्रादुःष्यात्[6]
निषन्ति। प्रादुःषन्ति
यच्परः किम्–अभिस्तः
मार्ष्टि[7] मृष्टः। मृजन्ति। मार्जन्ति
ममार्ज। ममार्जतुः। ममृजतुः
ममार्जिथ। ममार्ष्ठ
मार्जिता। मार्ष्टा। मृड्ढि
अमार्ट्। अमार्जम्
अमार्जीत्। अमार्क्षीत्
रोदिति[8]। रुदितः। रुदिहि

अरोदीत्[9] अरोदत्। अरुदिताम्
अरुदन्। अरोदीः। अरोदः
रुद्यात्। अरुदत्। अरोदीत्
स्वपिति। स्वपितः
सुष्वाप। सुषुपतुः। सुषुपुः
सुष्वपिथ। सुष्वप्थ
सुषुपतुः[10] सुषुपुः। सुसुष्वाप
स्वप्ता। अस्वपीत्। अस्वपत्
स्वप्यात्। सुप्यात्। सुषुप्यात्
अस्वाप्सीत्। श्वसिति। श्वसिता
अश्वसीत्। अश्वसत्। श्वस्याताम्
श्वस्यास्ताम्। अश्वसीत्
अनिति। आन। अनिता
आनीत्। आनत्
प्राणिति[11] जक्षिति। जक्षितः
जक्षति[12] अजक्षुः
इति रुदादयः पञ्च गताः
जागर्ति। जागृतः। जाग्रति
जागराञ्चकार। जजागार
जजागरतुः[13] अजागः
अजागृताम्। अजागरुः[14]
अजादौ किम्–जागृयुः
जागर्यात्। जागर्यास्ताम्
जागर्यासुः। अजागरीत्[15]

---

१–'अत उत्सार्वधातुके"। २–'दश्च'। ३–'श्नसोरल्लोपः। ४–'अस्तेर्भूः'। ५–'ध्वसोरेद्धावभ्यासलोपश्च'। ६–उपसर्गप्रादुर्भ्यामस्तिर्यच्परः'। ७–'मृजेर्वृद्धिः' 'क्ङित्यजादौ वेष्यते। ८–'रुदादिभ्यः सार्वधातुके"। ९–'रुदश्च पञ्चभ्यः' 'अड्गार्ग्यगालवयोः। १०–'सुविनिर्दुर्भ्यः सुपिसूतिसमाः। ११–'अनितेः। १२–'अदभ्यस्तात्'। १३–'जाग्रोऽविचिण्णल्ङित्सु'। १४–'जुसि च'।१५–'गुणो वृद्धिर्गुणो वृद्धिः प्रतिषेधो विकल्पनम्। पुनर्वृद्धिर्निषेधोऽतो यण्पूर्वाः

दरिद्राति । दरिद्रितः[१] दरिद्रति[२]
दरिद्राञ्चकार । ददरिद्रौ
'ददरिद्र' *इति तु निर्मूलम्
ददरिद्रतुः । दरिद्रिता
अदरिद्रात् । अदरिद्रिताम्
अदरिद्रुः । दरिद्रियात्
दरिद्र्यात् । अदरिद्रीत्
अदरिद्रासीत् चकास्ति । चकासति
चकासाञ्चकार । चकाद्धि
'चकाद्धि' इत्येव भाष्यम्
अचकात्[३] अचकाद्
अचकासुः । अचकाः[४] अचकात्
शास्ति । शिष्टः[५] शासति
शशासतुः । शास्तु । शिष्टात्
शिष्टाम् । शासतु । शाधि[६]
अशात् । अशिष्टाम् । अशासुः
अशाः । अशात् । शिष्यात्
अशिषत् । अशासिष्यत्

एतदादयः ५ धातवश्छान्दसाः
दीधीते । दीध्याते । दीध्ये[७]
दीध्याञ्चक्रे । दीधिता । दीधिष्यते
अथ त्रयः परस्मैपदिनः
सस्ति । सस्तः । ससन्ति
ससास । सेसतुः । सस्तु । सधि
असत् । असस्ताम्
असः-असत् । सस्यात्
असासीत् । अससीत्
सन्ति । सन्तः । संस्तन्ति
संस्ति । संस्तः । संस्तन्ति (इत्येके)
वष्टि । उष्टः । उशन्ति । वक्षि । उष्टः
उवाश । ऊशतुः । वशिता
वष्टु-उष्टात् । उड्ढि
अवट् । औष्टाम् । औशन् । अवशम्
उश्यातम् । उश्यास्ताम्
अवाशीत् । अवशीत् । ह्नुते । जुह्नवे
ह्नुवीत । ह्नोषीष्ट । अह्नोष्ट

इति अदादिप्रयोगाः ।

---

भासयो नव' इति । १-'इद्दरिद्रस्य' । २-'श्नाभ्यस्तयोरातः'' । ३-'तिप्यनस्तेः' । ४-'सिपि धातो रुर्वा' । ५-'शास इदङ्हलोः'' । ६-'शा हौ' । ७-'यीवर्णयोर्दीधी-वेव्योः ।

* अयम्भावः—दरिद्राधातोर्लिटि दरिद्राञ्चकार ददरिद्रौ, ददरिद्र इति रूपत्रयमुक्तं ग्रन्थकृता । तत्राद्यं द्वयं न्याय्यं तृतीयत्वन्याय्यम् । "कास्प्रत्ययादाममन्त्रे लिटि" इति सूत्रभाष्ये दरिद्राधातोराम उक्तत्वात् 'दरिद्राञ्चकार' इति न्याय्यम् । आत औ णलः" इत्यत्र प्रथमातिक्रमे कारणाभावात् ओकार एव विधातुमुचितः । वृद्धौ सत्यां तावतैव 'ययौ' इत्यादिसिद्धेः । तस्मादौकारविधानं दरिद्राधातोर्णलि 'दरिद्रातेरार्धधातुके वक्तव्यः' इत्यालोपे 'ददरिद्रौ' इत्यौकारश्रवणार्थं सम्पद्यते । ओकारविधाने तु आल्लोपे सति वृद्धेरसम्भवात् ददरिद्रो इत्योकार एव श्रूयते । अत एव लिटि आम्नेति विज्ञायते । आमि सति णल एवाप्रसक्तेः इति "वस्वेकाजाद्घसाम्" इति सूत्रभाष्ये ध्वनितं, कैयटेन च स्पष्टीकृतम् । अतो द्वितीयं ददरिद्रौ इत्यपि न्याय्यम् । तृतीयन्तु सुतरामन्याय्यमिति ।

# अथ जुहोत्यादिप्रयोगाः ।

जुहोति[1] जुहुतः । जुह्वति[2]
जुहवाञ्चकार[3] जुहाव
होता । होष्यति
जुहोतु । जुहुतात् । जुहुधि
जुहवानि । अजुहवुः
जुहुयात् । हूयात् । अहौषीत्
बिभेति । बिभितः-बिभीतः[4]
बिभ्यति । बिभयाञ्चकार
बिभाय । भेता
जिह्रेति । जिह्रीतः । जिह्रियति
जिह्रियाञ्चकार । जिह्राय
पिपर्ति[5] पिपूर्तः[6] पिपुरति
पपार । पप्रतुः[7] पप्रुः
पपरतुः । पपरुः
परिता । परीता
अपिपः । अपिपूर्ताम् । अपिपरुः
पिपूर्यात् । पूर्यात्
अपारीत् । अपारिष्टाम्
पिपर्ति । पिपृतः । पिप्रति
पिप्रियात् । प्रियात् । अपार्षीत्
बिभर्ति[8] बिभृतः । बिभ्रति
बिभृध्वे । बिभरामास

बभार । बभर्थ । बभृव
बिभृहि । बिभराणि
अबिभः । अबिभृताम् । अबिभरुः
बिभृयात् । भ्रियात् । भृषीष्ट
अभार्षीत् । अभृत
मिमीते[9] मिमाते[10] मिमते
प्रत्ययमास्त
जिहीते । जिहाते । जिहते
जहे । हाता । हास्यते
जहाति । जहितः[11] जहीतः
जहति । जहौ
जहाहि[12] जहिहि । जहीहि
अजहात् । अजहुः । अजहाः
जह्यात्[13] हेयात्[14] अहासीत्
प्रणिददाति । दत्तः । ददति
दत्ते । ददौ । देहि[15]
अददात् । अदत्ताम् । अददुः
दद्यात् । देयात्
अदात् । अदाताम् । अदुः
अदित । प्रणिदधाति
धत्तः *दधति
धत्थः । धत्थ । दध्वः । दध्मः

---

१—'जुहोत्यादिभ्यः श्लुः' 'श्लौ । २—'अदभ्यस्तात्' 'हु—श्नुवोः सार्वधातुके' । ३—'भी ह्री-भृ-हुवां श्लुवच्च'' । ४—'भियोऽन्यतरस्याम्' । ५—'अर्तिपिपर्त्योश्च' ६—'उदोष्ठ्यपूर्वस्य' उत्वम्, रपरत्वम्, 'हलि च' । ।७—'शॄ-दॄ-प्रां-ह्रस्वो वा' । ८—'भृञामित्' । ९—'ई हल्यघोः' । १०—'श्नाऽभ्यस्तयोरातः' । ११—'जहातेश्च' । १२—'आ च हौ' । १३—'लोपो यि' । १४—'एर्लिङि' । १५—'घ्वसोरेद्धावभ्यासलोपश्च' ।

---

* धाधातोर्लटि तसि सार्वधातुकसंज्ञायां अपि "जुहोत्यादिभ्यः श्लुः" इति श्लौ 'श्लौ'

धत्ते । धत्से । धद्ध्वे

धेहि । अधित

अथ त्रयः स्वरितेतः

नेनेक्ति[1] नेनिक्तः । नेनिजति

निनेज । नेक्ता । नेक्ष्यति

नेनेक्तु । नेनिग्धि । नेनिजानि[2]

अनेनेक् । अनेनिक्ताम् । अनेनिजुः

नेनिज्यात् । निज्यात्

अनिजत् । अनैक्षीत् । अनिक्त

वेवेक्ति । वेविक्ते । विवेजिथ

वेवेष्टि । वेविष्टे

अविषत्[3] अविक्षत

अविक्षाताम् । अविक्षन्त[4]

अथ आ गणान्ताः परस्मैपदिनश्छान्दसश्च

'जिघर्म्यग्निं हविषा घृतेन'

'अयं स्रुवोऽभिजिहर्ति होमान्'

इयर्ति[5] इयृतः

आर । आरतुः । आरिथ[6]

अर्ता । अरिष्यति । इयराणि

ऐयः । ऐयृताम् । ऐयरुः

इयृतात् । अर्यात् । आरत्

ससर्ति । बभस्ति

बब्धः[7] । बप्सति । चिकेत्ति

तुतोर्ति । तुतूर्तः । तुतुरति

दिधेष्टि । दिधिष्टः । दधन्ति

दधन्तः । दधनति

जजन्ति । जजातः[8]

जजति । जजंसि । जजान

जजन्यात् । जजायात्

जन्यात् । जायात्

'देवाञ्जिगाति सुम्नयुः'

जिगीतः । जिगति

इति जुहोत्यादिप्रयोगाः ।

---

१–'निजां त्रयाणां गुणः श्लौ' । २–'नाऽभ्यस्तस्याचि पिति सार्वधातुके' ( गुणनिषेधः ) । ३–'पुषादि-द्युताद्य्लृदितः परस्मैपदेषु' । ४–'क्सस्याऽचि' ( अल्लोपः ) । ५–'बहुलं छन्दसि' इत्येव सिद्धे 'अर्त्ति-पिपर्त्योश्चे'तीत्त्वविधानादयं भाषायामपि । 'अभ्यासस्याऽसवर्णे' ( इयङ् ) । ६–'इडत्त्यर्त्तिव्ययतीनाम्' ( नित्यमिट् ) । ७–'घसि-भसोर्हलि च' ( उपधालोपः ) 'झलो झलि' (सलोपः)। ८–'जन-सन-खनां सञ्झलोः' । इति जुहोत्यादिप्रकरणम् ।

---

इति धातोर्द्वित्वे अभ्याससंज्ञायां ह्रस्वे "अभ्यासे चर्च" इति धकारस्य दकारे "उभेऽभ्यस्तम्" इति अभ्यस्तसंज्ञायां "श्नाभ्यस्तयोरातः" इति अकारस्य लोपे "दधस्तथोश्च" इति भष्भावे "खरि च" इति चर्त्वे सकारस्य रुत्वे विसर्गे च रूपम् । न चात्र "अचः परस्मिन् पूर्वविधौ" इति सूत्रेण आकारस्य स्थानिवद्भावेन झषन्तत्वाभावाद् भष्भावो न स्यादिति वाच्यम् । अत्र भष्भावे कर्तव्ये आलोपो न स्थानिवत्, 'दधस्तथोश्च' इति सूत्रारम्भसामर्थ्यात्, इति वामन-माधवौ । वस्तुतस्तु "पूर्वत्रासिद्धे न स्थानिवत्" इति परिभाषया त्रिपादिस्थे भष्भावे कर्तव्ये सपादसप्ताध्यायीस्थाकारलोपस्य स्थानिवत्त्वनिषेधात् । परिभाषारूपयुक्त्या कार्यनिर्वाहे सति वचनारम्भाश्रयणे निष्फलमेव ।

# अथ दिवादिप्रयोगाः ।

अथ क्षुषन्ताः परस्मैपदिनः

दीव्यति[1] दिदेव । देविता

देविष्यति । दीव्यतु । अदीव्यत्

दीव्येत् । दीव्यात्

अदेवीत् । अदेविष्यत्

परिषीव्यति । परिषिषेव

न्यषेवीत् । न्यसेवीत्

स्नुस्यति । सुष्णोस

स्नस्यति । सस्नास । चक्नास

बुव्योष । नृत्यति । ननर्त

नर्तिष्यति[2] नर्त्स्यति

नृत्येत् । नृत्यात् । अनर्तीत्

त्रस्यति । त्रसति

त्रेसतुः । तत्रसतुः

क्षिप्यति । क्षेप्ता

पुष्यति । पुपुष

तिम्यति । स्तिम्यति

व्रीड्यति । इष्यति

सह्यति । सुह्यति

जीर्यति । जजरतुः । जेरतुः

जरिता । जरीता

जीर्येत् । जीर्यात् । अजरत्[3]

अजारीत् । अजारिष्टाम्

झीर्यति । जझरतुः । अझारीत्

सूयते । सुषुवे

सुषुविषे[4] सुषुविवहे

सोता । सविता

दूयते । दीयते । दिदीये[5]

दाता[6] । दास्यते

अदास्त । अदास्थाः

डीयते । डिड्ये

धीयते । दिध्ये । धेता

मीयते । रीयते

लेता[7] लाता । लेष्यते । लास्यते

एज्विषये किं लीयते, लिल्ये

व्रीयते । विव्रिये

पीयते । मायते । ममे

ईयते । अयाञ्चक्रे

प्रीयते । पिप्रिये

अथ परस्मैपदिनः ४

श्यति[8] श्यतः । श्यन्ति

शशौ । शशतुः । शाता । शास्यति

अशात्[9] अशाताम्

अशासीत् । अशासिष्टाम्

छ्यति । स्यति । ससौ

अभिष्यति । अभ्यस्यत् । अभिससौ

---

१—'दिवादिभ्यः श्यन्' 'हलि च'। २—'सेऽसिचि कृत–चृत–छृद–तृद–नृतः' ( इड्विकल्पः )। ३—'जॄ–स्तम्भु–म्रुचु' ( इत्यङ् वा ) 'ऋदृशोऽङि गुणः'। ४—'स्वरति–सूति–सूयति–धूञूदितो वा' इति विकल्पं बाधित्वा 'श्र्युकः किति' इति निषेधे प्राप्ते, क्रादिनियमान्नित्यमिट्। ५—'दीङो युडचि क्ङिति' ( युट् ) 'वुग्युटावुवङ्–यणोः सिद्धौ वक्तव्यौ'। ६—'मीनाति–मिनोति दीङां ल्यपि च' ( इत्यात्वम् )। ७—'विभाषा लीयतेः'। ८—'ओतः श्यनि'। ९—'विभाषा घ्रा–

द्यति । ददौ । प्रणिदाता
देयात् । अदात्
अथ आत्मनेपदिनः
जायते[1] जज्ञे
जज्ञाते । जज्ञिरे । जनिता
जनिष्यते । अजनि[2] अजनिष्ट
दीप्यते । दिदीपे
अदीपि । अदीपिष्ट
पूर्यते । अपूरि । अपूरिष्ट
तूर्यते । तुतूरे । धूर्यते । दुधूरे
गूर्यते । जुगूरे
तप्यते । तप्ता । तप्स्यते
'द्युत धामानि द्युतः पत्यमानः'
वृत्यते । पक्षान्तरे तु—वावृत्यते
'ततो वावृत्यमाना सा रामशालां
न्यविक्षते'ति भट्टिः
क्लिश्यते । क्लेशिता
काश्यते । वाश्यते । ववाशे
अथ पञ्च स्वरितेतः
मृष्यति । मृष्यते । ममर्ष
ममृषे । शुच्यति । शुच्यते
शुशोच । शुशुचे । अशुचत्
अशोचीत् । अशोचिष्ट
नह्यति । नह्यते । ननाह
नेहिथ । ननद्ध । नेहे

नद्धा । नत्स्यति । अनात्सीत्
रज्यति । रज्यते । शप्यति । शप्यते
अथैकादशाऽनुदात्तेतः ।
पद्यते । पेदे । पत्ता
पद्येत । पत्सीष्ट
प्रण्यपादि[3] अपत्साताम् । अपत्सत
खिद्यते । चिखिदे । खेत्ता । अखित्त
विद्यते । वेत्ता
बुध्यते । बुबुधे । बोद्धा
भोत्स्यते । भुत्सीष्ट
अबोधि । अबुद्ध । अभुत्साताम्
युध्यते । युयुधे । योद्धा । अयुद्ध
अथं युध्यतीति[4] अनुरुध्यते
अण्यते । आणे । अणिता
मन्यते । मेने । मन्ता
युज्यते । योक्ता
'संसृज्यते सरसिजैररुणांशुभिन्नैः'
सस्रुजिषे । स्रष्टा । स्रक्ष्यते
सृक्षीष्ट[5] असृष्ट । असृक्षाताम्
लिश्यते । लेष्टा । लेक्ष्यते
लिक्षीष्ट । अलिक्षत । अलिक्षाताम्
अथ आगणान्ताः परस्मैपदिनः
'यन्मह्यमपराध्यति' 'विराध्यन्तं क्षमेत कः'
राध्यत्योदनः । कृष्णाय राध्यति
रराध । रराधतुः । रराधिथ[6]

षेट्—शाच्छासः' ( सिचो वा लुक् ) 'यम-रम-नमातां सक् च' (इट् सकौ) । १—'ज्ञाजनोर्जा' । २—'दीप जन-बुध-पूरि-तायि-प्यायिभ्योऽन्यतरस्याम्' ( वा चिण् ) 'जनि—वध्योश्च' ( वृद्धिनिषेधः) । ३—'चिण् ते पदः' । ४—'युधमिच्छतीति क्यच् । अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम्' ५—'लिङ्सिचोरात्मनेपदेषु' । ६—'राधो हिंसायाम्' इत्येत्वाभ्यासलोपौ न, हिंसा-

शाद्धा । शात्स्यति
विध्यति[1] विव्याध । विविधतुः
विव्यधिथ । विव्यद्ध
व्यद्धा । व्यत्स्यति । विध्येत्
विध्यात् । अव्यात्सीत्
पुष्यति । पुपोष । पुपोषिथ
पोष्टा । पोक्ष्यति । अपुषत्
अशुषत् । श्लिष्यति । शिश्लेष
श्लेष्टा । श्लेक्ष्यति
अश्लिक्षत् *कन्यां देवदत्तः
आलिङ्गन एवेति किम्—
'समाश्लिषज्जतु काष्ठम्'
अश्लेषि । अश्लिक्षाताम् । अश्लिक्षत
अश्लिष्ठाः । अश्लिड्ढ्वम्
शक्यति शक्यते वा हरिं द्रष्टुं भक्तः
शशाक । शेकिथ । शशक्थ

शेके । शक्ता । शक्ष्यति
शक्यते । अशकत् । अशाक
शकिता । शकिष्यति
स्विद्यति । सिष्वेद । सिष्वेदिथ
स्वेत्ता । अस्विदत्
क्रोद्धा । क्रोत्स्यति । क्षोद्धा
कथं क्षुधित[2] इति ?
शुध्यति । शुशोध । शोद्धा
सिध्यति । सेद्धा
सेत्स्यति । असिधत्
रध्यति । ररन्धतुः[3] ररन्धिथ[4]
ररद्ध । ररन्धिव । रेध्व
रधिता[5] । रद्धा
रधिष्यति । रत्स्यति
अरधत्[6]
नश्यति । ननाश । नेशतुः

र्थस्य सकर्मकतया दैवादिकत्वाऽयोगात् । १—'ग्रहि-ज्या-वयि-व्यधीति' ( सम्प्रसारणम् ) २—सम्पदादिक्विबन्तात्तारकादित्वादितजिति माधवः। वस्तुतस्तु 'वसति-क्षुधोः' इतीट् । ३—'रधि-जभोरचि' ( नुम् )। ४—'रधादिभ्यश्च' ( रधादिः—'रध, नश्, तृप, दृप्, द्रुह्, मुह्, ष्णुह्, ष्णिह् )। ५—'नेट्यलिटि रधेः' ( नुन्निषेधः )। ६—'अनिदितां हल उपधायाः क्ङिति'

* श्लिष् धातोर्लुङि तिपि अटि च्लौ पुषादित्वादङि प्राप्ते "निरवकाशो विधिरपवादः" इति वचनेन अपवादत्वात् "श्लिषः" सूत्रेण क्से अनुबन्धलोपे "षढोः कः सि" इति षस्य कत्वे कात्परकत्वात् षत्वे 'अश्लिक्षत्' इति। न च "चिण् भावकर्मणोः" इति सूत्रेण प्राप्तस्य चिणोऽपि "श्लिषः" इति सूत्रेण बाधः स्यादिति वाच्यम्। पुरस्तादपवादन्यायेन पुषाद्यङ एव बाधकत्वात्। एवञ्च "श्लिषः" इति सूत्रेणाऽलिङ्गनरूपधात्वर्थे क्से सिद्धे "आलिङ्गने" इति योगविभागेन श्लिषधातोरालिङ्गनेऽर्थे एव क्सो नान्यत्रेति नियम्यते। तथा च यदि "शल इगुपधादनिटः क्सः" इति सूत्रविहितस्यक्सस्य "आलिङ्गने" इत्यनेन नियमो न स्यात्तदा पुनरपि योगविभागो व्यर्थ एव, व्यर्थः सन् "शलः" इत्यादिसूत्रविहितस्यापि नियमं करोति। ततश्चानालिङ्गने 'समश्लिषज्जतु काष्ठम्' इत्यत्राङ्। कर्मणि प्रत्यये तु चिण् सिद्ध्यतीति।

नेशिथ । ननंष्ठ[1] नेशिव । नेश्म
नेशिम-नेश्म । नशिता । नंष्टा
नशिष्यति । नङ्क्ष्यति
नश्येत् । नश्यात्
अनशत् । प्रणश्यति
प्रनष्टा[2] प्रनङ्क्ष्यति । नशिष्यति
'नाऽग्निस्तृप्यति काष्ठानाम्'
'पितॄनताप्सीदिति' भट्टिः
ततर्पिथ । तत्रप्थ । ततर्प्थ
तर्पिता । तर्प्ता । त्रप्ता
अतर्पीत् । अतृपत्
अताप्सीत्[3]-अत्राप्सीत्
द्रुह्यति
दुद्रोहिथ दुद्रोग्ध[4] । दुद्रोढ
द्रोहिता । द्रोग्धा । द्रोढा
द्रोहिष्यति । ध्रोक्ष्यति[5]
अद्रुहत् । मुह्यति
मुमोहिथ । मुमोग्ध । मुमोढ
मोहिता । मोग्धा । मोढा
मोहिष्यति । मोक्ष्यति । अमुहत्
स्नुह्यति । सुष्णोह
सुष्णोहिथ । सुष्णोग्ध । सुष्णोढ
सुष्णुहिव । सुष्णुह्व
स्नोहिता । स्नोग्धा । स्नोढा

स्नोहिष्यति । स्नोक्ष्यति
अस्नुहत् । स्निह्यति । सिष्णेह
रधाः समामाः
प्रणिशाम्यति[6] शेमतुः । शेमिथ
शमिता । अशमत्
ताम्यति । तमिता
अतमत् । अदमत्
श्राम्यति । अश्रमत्
भ्राम्यति । अभ्रमत्
क्षाम्यति । चक्षमिथ । चक्षन्थ
चक्षमिव । चक्षण्व
चक्षमिम । चक्षण्म
क्षमिता । क्षन्ता
'अषितः क्षाम्यतेः क्षान्तिः-
क्षमुषः क्षमतेः क्षमा'
क्लाम्यति । क्लामति । अक्लमत्
माद्यति । अमदत्
शमादयोऽष्टौ गताः
अस्यति । आस । असिता
आस्थत्[7] । पर्यास्थत
यस्यति[8] । यसति
संयस्यति । संयसति
अनुपसर्गात् किं प्रयस्यति
जस्यति । तस्यति । अतसत्

---

( नलोपः ) । १-'मस्ज-नशोर्झलि' (नुम्) । २-'नशेः षान्तस्य' (णत्वनिषेधः)
३-'स्पृश-मृश-कृष-तृप-दृपां च्लेः सिज्वा वाच्यः' । ४-'वा द्रुह-मुह-ष्णुह-ष्णिहाम्'
५-'वा द्रुहे'ति घत्वपक्षे दकारस्य भषि घस्य चर्त्वे सस्य षत्वे रूपम् । ढत्वपक्षेऽपि 'षढो'रिति कत्वे एतदेव रूपम् । तदाह-'घत्व-ढत्वयोस्तुल्यं रूपम्' इति । ६-'शमामष्टानां दीर्घः श्यनि' ।
७-'अस्यतेस्थुक्' । ८-'यसोऽनुपसर्गात्' 'संयसश्च' ।

दृस्यति । अदृसत्
वस्यति । ववास
ववसतुः । वेसतुः । वेसुः
अव्युषत् । अव्युसत्
बिस्यति । अबिसत् । अकुसत्
उच्यति । उवोच । ऊचतुः
मा भवानुचत्
बभर्श । अभृशत्
भ्रश्यति[1] । अभ्रशत्
वृश्यति । अवृशत् । कृश्यति
रोषिता । रोष्टा । रेषिता । रेष्टा
युप्यति । रुप्यति । लुप्यति
लोपिता । लोभिता । लोब्धा
लोभिष्यति । लुभ्येत् । लुभ्यात्
अलुभत् । क्षुभ्यति । क्लिद्यति
चिक्लेदिथ । चिक्लेत्थ
चिक्लिदिव । चिक्लिद्व
चिक्लिदिम । चिक्लिद्म
क्लेदिता । क्लेत्ता
मेद्यति[2] । 'अमिदत्' 'अमेदिष्ट'
'अमेदीत्' इति मा भूत्
आनर्ध । आर्धत् । अगृधत्
तेन—क्षीयते मृग्यति
इत्यादिसिद्धिरित्याहुः

इति दिवादिप्रयोगाः ।

## अथ स्वादिप्रयोगाः ।

सुनोति[1] । सुनुतः । सुन्वन्ति[2]
सुन्वः, सुनुवः, सुन्वहे, सुनुवहे
सुषाव । सुषुवे । सोता
सुनु । सुनवानि । सुनवै
सुनुयात् । सूयात्
असावीत्[3] । असोष्ट
अभिषुणोति । अभ्यषुणोत्
अभिसुषाव । विसोष्यति[4]
सिनोति । विसिनोति
सिषाय । सिष्ये । सेता । शेता
ममौ[5] । ममिथ । ममाथ
मिम्ये । माता । मीयात्
मासीष्ट । अमासीत् । अमासिष्टाम्
अमास्त । प्रणिचिनोति
प्रणिचिकाय[6] । चिचाय
चिक्ये । चिच्ये
अचैषीत् । अचेष्ट
स्तृणोति । स्तृणुते
स्तर्यात्[7] । स्तरिषीष्ट[8] स्तृषीष्ट
अस्तरिष्ट । अस्तृत

१—'अनिदितां हल उपधायाः क्ङिति' । २—'मिदेर्गुणः' । इति दिवादिप्रकरणम् ।

१—'स्वादिभ्यः श्नुः' । २—'हु-श्नुवोः सार्वधातुके' ( यण् ) । ३—'स्तु-सु-धूञ्भ्यः परस्मैपदेषु' ( इट् ) । ४—'सुनोतेः स्य-सनोः' ( षत्वनिषेधः ) । ५—'मीनाति-मीनोति-दीङां ल्यपि च' । ६—'विभाषा चेः' ( वा कुत्वम् ) । ७—'गुणोऽर्तिसंयोगाद्योः' । ८—'ऋतश्च संयो-

कृणोति । कृणुते । चकार
चकर्थ । चक्रे । क्रियात्
कृषीष्ट । अकार्षीत् । अकृत
ववरिथ[1] ।ववृव । ववृवहे
वरिता । वरीता
वरिषीष्ट[2] । वृषीष्ट । अवारीत्
अवरिष्ट । अवरीष्ट । अवृत
धुनोति । धुनुते
अधौषीत् । अधोष्यत्
धूनोति । धूनुते
दुधविथ[3] । दुधोथ
दुधुविव । अधावीत्
अधविष्ट । अधोष्ट
अथ परस्मैपदिनः
दुनोति । प्रहिणोति[4] । जिघाय[5]
पृणोति । पर्ता
स्पृणोति । पस्पार । स्मृणोति
आप्नोति । आप्नुतः । आप्नुवन्ति
आप्नुवः । आप । आप्ता
आप्नुहि । आपत्
अशकत् । राध्नोति
अपरेधतुः[6] । रेधुः । रेधिथ
राद्धा । साध्नोति । साद्धा
असात्सीत् । असाद्धाम्
अथ द्वावनुदात्तेतौ
अश्नुते । आनशे[7] । अशिता
अष्टा । अशिष्यते । अक्ष्यते
अश्नुवीत । अक्षीष्ट । अशिषीष्ट
आशिष्ट । आष्ट । आक्षाताम्
स्तिघ्नुते । तिष्टिघे । स्तेघिता
अथ आ गणान्ताः परस्मैपदिनः
तिक्नोति । तिग्नोति । षघ्नोति
धृष्णोति । दधर्ष । धर्षिता
दभ्नोति । ददम्भ
देभतुः[8] । ददम्भतुः
'देभ' 'देभिथ' 'देभ'
ददम्भ । ददम्भिथ । ददम्भ
दभ्यात् । तृप्नोति । अह्नोति
दघ्नोति । चम्नोति
रिणोति । क्षिणोति
'न तथशः शस्त्रभृतां क्षिणोति'
रिक्षिणोति । चिरिणोति
जिरिणोति । दाश्नोति । दृणोति

इति स्वादिप्रयोगाः ।

---

गाद्योः' ( इड्विकल्पः ) । १—'बभूथा—ततन्थ—जगृम्भ—ववर्थेति निगमे' । २—'लिङ्सिचोरात्मनेपदेषु' 'न लिङि' । ३—'स्वरति—सूति—सूयति—धूञूदितो वा' । ४—'हिनुमीना' ( णत्वम् ) । ५—'हेरचङि' । ६—'राधो हिंसायाम्' (एत्वाऽभ्यासलोपौ) । ७—'अश्नोतेश्च ( नुट् )। ८—'श्रन्थि-ग्रन्थि—दम्भि स्वञ्जीनां लिटः कित्वं वा' । 'दम्भेश्च एत्वाऽभ्यासलोपौ वक्तव्यौ' ।

इति स्वादयः ।

# अथ तुदादिप्रयोगाः ।

इतः षट् स्वरितेतः

तुदति[1] । तुदते

तुतोद । तुतोदिथ । तुतुदे

तोत्ता । अतौत्सीत् । अतुत्त

नुदति । नुदते

नुनोद । नुनुदे । नोत्ता

देष्टा । दिक्षीष्ट

अदिक्षत् । अदिक्षत

भृज्जति[2] । भृज्जते । बभर्ज[3]

बभर्जतुः । बभर्जिथ । बभर्ष्ठ

बभर्ज्जे । बभ्रज्ज । बभ्रज्जतुः

बभ्रज्जिथ । बभ्रष्ठ[4] । बभ्रज्जे

भ्रष्टा । भर्ष्टा । भ्रक्ष्यति-भर्क्ष्यति

भृज्ज्यात् । भृज्ज्यास्ताम्

भर्क्षीष्ट । भ्रक्षीष्ट

अभार्क्षीत् । अभ्राक्षीत्

अभर्ष्ट । अभ्रष्ट

क्षिपति । क्षिपते । क्षेप्ता

अक्षैप्सीत् । अक्षिप्त

कृषति । कृषते । क्रष्टा । कर्ष्टा

कृष्यात् । कृक्षीष्ट । अक्राक्षीत्

अकार्क्षीत् । अकृक्षत्

अकृष्ट । अकृक्षाताम् । अकृक्षत

अकृक्षत । अकृक्षाताम् । अकृक्षन्त

ऋषति । आनर्ष

अथ आत्मनेपदिनश्चत्वारः

जुषते । उद्विजते

उद्विजिता[5] उद्विजिष्यते

लज्जते । लेजे । लज्जते । ललज्जे

अथ परस्मैपदिनः

वृश्चति । वव्रश्च । वव्रश्चतुः

वव्रश्चिथ । वव्रष्ठ

व्रश्चिता । व्रष्टा

व्रश्चिष्यति । व्रक्ष्यति

वृश्च्यात् । अव्रश्चीत् । अव्राक्षीत्

विचति । विव्याच । विविचतुः

व्यचिता* व्यचिष्यति । विच्यात्

अव्याचीत् । अव्यचीत्

उच्छति । उच्छति

आनर्छ[6] । आनर्छतुः

---

१—'तुदादिभ्यः शः' । २—'ग्रहिज्ये'ति सम्प्रसारणम् । ३—'भ्रस्जो रोपधयोरमन्यतरस्याम्' । ४—'स्कोः संयोगाद्योरन्ते च' 'व्रश्च—भ्रस्ज—सृज—मृज—यज—राज—भ्राज—च्छशां षः' । ५—'विज इट्' (ङिद्वा) । ६—'ऋच्छत्यृताम्' द्विहल्ग्रहणस्याऽनेकहलुप-

---

* 'व्यचेः कुटादित्वमनसि' इति वार्तिकन्तु 'अब्राह्मणमानय' इतिवत् यत्रास्मिन्नः असत्सदृशः कृदन्तीयप्रत्ययः स्यात्तत्रैव लगति । तेन 'उद्विचितुम्' इत्यादिकृदन्तस्थले कुटादिभ्योऽञ्णिङित्" इति ङित्वेन "ग्रहिज्यावयि" इत्यादिना सम्प्रसारणं सिद्ध्यति । 'व्यचिता' 'व्यचिष्यति' इत्यादौ तु तिङन्तत्वेन ङित्वाभावपक्षे वार्तिकाप्रवृत्त्या सम्प्रसारणाभावः । अन्यथा तत्रापि सम्प्रसारणं स्यात् । सादृश्यञ्च कृदन्तत्वेन ग्राह्यम् ।

ऋच्छिता । मिमिच्छ । अमिच्छीत्
तत्वाच । आनर्च
क्षुभति । लोभिता । लोब्धा
लोभिष्यति । रिफति । रिरेफ
'शिशुं न विप्रा मतिभी रिहन्ति'
तृपति । ततर्प
तर्पिता । अतर्पीत् । तृम्फति[1]
तृम्फति । ततृम्फ । तृफ्यात्
तुपति । तुम्पति
तुफति । तुम्फति
दृपति । दृम्फति
ऋफति । आनर्फ
ऋम्फति । ऋम्फाञ्चकार
गुफति । जुगोफ
गुम्फति । जुगुम्फ
उभति । उवोभ
उम्भति । उम्भाञ्चकार
शुभति । शुम्भति । दृभति
चर्तिता । चर्तिष्यति[2] चर्त्स्यति
अचर्तीत् । विधति । वेधिता
जुडति । 'रतो मजुनन्ति'
मृडति । मर्डिता
पृडति । पृणति । पपर्ण
वृणति । तुतोण । पुणति
सुरति । सुषोर । सूर्यात्
कुरति । कूर्यात्[3]
तृहति । ततर्ह । स्तृहति

तस्तर्ह । स्तर्हिता । स्तर्ढा
अतर्हीत् । अताङ्क्षीत् । अतार्ढाम्
इच्छति[4] । एषिता । एष्टा
एषिष्यति । इष्यात् । ऐषीत्
मिषति । मेषिता । लिलेख
चुकुटिथ । चुकोट । चुकुट
कुटिता । कुर्यात्
स्फुटति । पुस्फोट
त्रुट्यति । त्रुटति । तुत्रोट । त्रुटितः
तुटति । तुतोट । तुटिता
चकर्ड । कडिता
थुडति । तुथोड । तुस्थोड
निःष्फुरति । निःस्फुरति[5] पस्फार
गुरते । जुगुरे । गुरिता
'परिणूतगुणोदयः'

इतश्चत्वारः परस्मैपदिनः

नुवति । अनुवीत् । धुवति
जुगुविथ । जुगुथ । गुता
गुष्यति । अगुषीत् । अगुताम्[6]
अगुषुः । ध्रुवति । दुध्रुविथ
ध्रुविता । ध्रुविष्यति । ध्रूयात्
अध्रुवीत् । अध्रुविष्टाम् । कुविता
अकुविष्ट । कुता । अकुत
व्याप्रियते । व्यापप्रे । व्यापप्राते
व्यापरिष्यते। व्यापृत । व्यापृषाताम्
म्रियते[7] । ममार । ममर्थ

लक्षणत्वान्नुट् । १—'शे तृम्फादीनां नुम्वाच्यः' । २—'सेऽसिचि-कृत-चृत-छृद-तृद-नृतः' (वेट्) । ३—'न भकुर्छुराम्' इति निषेधो न, करोतेरेव तत्र ग्रहणात् । ४—'इषुगमियमां छः' । ५—'स्फुरति-स्फुलत्योर्निर्निविभ्यः' (वा षः) । ६—'ह्रस्वादङ्गात्' । ७—'म्रियतेर्लुङ्-लिङोश्च' ।

ममृव । मर्तासि । मरिष्यति
मृषीष्ट । अमृत
अथ परस्मैपदिनः २७
रियति । पियति । रेता । पेता
सुवति । सविता
किरति । किरतः
चकार । चकरतुः
करिता । करीता
कीर्यात् । अकारीत्
उपस्किरति[1]
उपाचस्किरत[2] । उपचस्कार
उपस्किरति[3]
प्रतिस्किरति
गिरति[4] । गिलति
जगार । जगाल
जगरिथ । जगलिथ
गरिता । गरीता
गलिता । गलीता
आद्रियते । आद्रियेते
आदद्रे । आदद्रिषे
आदर्ता । आदरिष्यते
आदृषीष्ट । आदृत
आदृषाताम् । म्रियते
पृच्छति । पप्रच्छ । पप्रच्छतुः
पप्रच्छिथ । पप्रष्ठ

भ्रष्टा । भ्रक्ष्यति । अभ्राक्षीत्
ववृश्चिथ । ववृष्ठ[5]
व्रष्टा । व्रक्ष्यति
वृश्चेत् । वृश्च्यात् । अव्राक्षीत्
मज्जति । ममज्ज
ममङ्क्थ[6] । ममज्जिथ
मङ्क्ता । मङ्क्ष्यति
अमाङ्क्षीत् । अमाङ्क्ताम्
अमाङ्क्षुः । रोक्ता । रोक्ष्यति
अरौक्षीत् । अरौक्ताम्
छोप्ता । अच्छौप्सीत्
रोष्टा । रोक्ष्यति
रेष्टा । रेक्ष्यति
अलिक्षत्[7]
स्प्रष्टा । स्पर्ष्टा
स्प्रक्ष्यति । स्पर्क्ष्यति
अस्प्राक्षीत्[8] । अस्पार्क्षीत्
अस्पृक्षत् । विच्छायति[9]
विच्छायाञ्चकार । विविच्छ[10]
विशति । वेष्टा
अम्राक्षीत् । अमार्क्षीत् । अमृक्षत्
सीदती । सीदन्ती
अथ स्वरितेतः ६
मिलति । मिलते
मिमेल । मिमिले

---

१–'किरतौ लवने' (सुट्)। २–'अड्भ्यासव्यवायेऽपि ('सुट् कात्पूर्व इति वक्तव्यम्')। ३–'हिंसायां प्रतेश्च'। ४–'अचि विभाषा'। ५–'विभाषा सृजि-दृशोर्झल्यमकिति' (अमागमः)। ६–'मस्जेरन्त्यात्पूर्वो नुम्वाच्यः'। ७–'शल इगुपधादनिटः क्सः'। ८–'स्पृश-मृश-कृष-तृप-दृपां च्लेः सिज्वा वाच्यः'। ९–'गुपू-धूपू-विच्छि-पणि-पनिभ्य आयः'। १०–'आय

मुञ्चति[1] मुञ्चते । मोक्ता
मुच्यात् । मुक्षीष्ट । अमुचत्
अमुक्त । अमुक्षाताम्
लुम्पति । लुम्पते
अलुपत् । अलुप्त
विन्दति । विन्दते
विवेद । विविदे
वेदिता । वेत्ता । परिवेत्ता
लिम्पति । लिम्पते । लेप्ता
अलिपत्[2] अलिपत । अलिप्त

सिञ्चति । सिञ्चते
असिचत् । असिचत । असिक्त
अभिषिञ्चति । अभ्यषिञ्चत्
अभिषिषेच
अथ परस्मैपदिनः ३
कृन्तति । चकर्थ । कर्तिता
कर्तिष्यति[3] कर्त्स्यति अकर्तीत्
खिन्दति । चिखेद । खेत्ता
पिंशति । पेशिता
'त्वष्टा रूपाणि पिंशतु'

इति तुदादिप्रयोगाः

## अथ रुधादिप्रयोगाः ।

अथ स्वरितेतः इरितश्च ९
रुणद्धि[1] रुन्धः[2] रुन्धन्ति
रुन्धे । रोद्धा । रोत्स्यति
रोत्स्यते । रुणद्धु । रुन्धात्
रुन्धि । रुणधानि । रुणधै
अरुणत् । अरुन्धाम्
अरुणत् । अरुणः । अरुणधम्
अरुधत् । अरौत्सीत् । अरुद्ध
भिनत्ति । भिन्ते । भेत्ता
भेत्स्यति । भेत्स्यते
अभिनत्-अभिनः

अभिनदम् । अभिन्त
अभिदत् । अभैत्सीत् । अभित्त
अच्छिदत् । अच्छैत्सीत् । अच्छित्त
रिणक्ति । रिङ्क्ते । रिरेच
रिरिचे । रेक्ता । अरिणक्
अरिचत् । अरैक्षीत् । अरिक्त
विनक्ति । विङ्क्ते
क्षुणत्ति । क्षुन्ते । क्षोत्ता
अक्षुदत् । अक्षौत्सीत् । अक्षुत्त
योक्ता । छृणत्ति । छृन्ते । चच्छर्द
चच्छृदिषे[3] चच्छृत्से

---

दय आर्धधातुके वा' । १-'शे मुचादीनाम्' ( नुम् ) । २-'लिपि-सिचि-ह्वश्च' ( ङ्ग ) ।
३-'सेऽसिचि-कृत-चृत-छृद-तृद-नृतः' ( इड्विकल्पः ) ।

---

१-'रुधादिभ्यः श्नम्' । २-'श्नसोरल्लोपः' । णत्वस्याऽसिद्धत्वादनुस्वारः, परसवर्णश्च तस्याऽसिद्धत्वाण्णत्वं न । 'न पदान्त-द्विर्वचन०' इति सूत्रे ऽनुस्वार-परसवर्णयो रल्लोपो न स्थानिवत् । ३-'सेऽसिचि-कृत-चृत-छृद-तृद-नृतः' ( वेट् ) ।

छर्दिता । छर्दिष्यति । छर्त्स्यति
अच्छृदत् । अच्छर्दीत् । अच्छर्दिष्ट
तृणत्ति
परस्मैपदी१-कृणत्ति
अथ आत्मनेपदिनः २
इन्धे[1] इन्त्से । इन्धिता
इनद्धे । ऐन्ध । ऐन्धाः
खिन्ते । खेत्ता । विन्ते । वेत्ता ।

अथ परस्मैपदिनः

शिनष्टि । शिष्टः । शिंषन्ति
शिशेषिथ । शेष्टा । शेक्ष्यति
शिण्ढि । शिण्ड्ढि[2] । शिनषाणि
अशिनट् । अशिषत्[3]
पिनष्टि । भनक्ति
बभञ्जिथ । बभङ्क्थ । भङ्क्ता
भुनक्ति । भोक्ता । भोक्ष्यति
अभुनक् । तृणेढि[4] तृण्ढः

ततर्ह । तर्हिता । अतृणेट्
हिनस्ति । जिहिंस । हिंसिता
उनत्ति । उन्तः । उन्दन्ति
उन्दाञ्चकार
औनत् । औन्ताम् । औन्दन्
औनः । औनत् । औनदम्
अनक्ति । अङ्क्तः । अञ्जन्ति
आनञ्ज । आनञ्जिथ । आनङ्क्थ
अङ्क्ता । अञ्जिता
अङ्ग्धि । अनजानि
आनक् । आञ्जीत्[5]
तनक्ति । तङ्क्ता । तञ्चिता
विनक्ति । विङ्क्तः
विविजिथ[6] विजिता
अविनक् । अविजीत्
वृणक्ति । वर्जिता
पृणक्ति । पपर्च

इति रुधादिप्रयोगाः ।

## अथ तनादिप्रयोगाः ।

अथ सप्त स्वरितेतः

तनोति[1] तन्वः[2] तनुतः
तनुते । ततान । तेने
तनु । अतनीत् । अतानीत्
तेनेह न[3]—यूयमतनिष्ट
अतत[4] अतनिष्ट

---

१–'श्नान्नलोपः' 'श्नसोरल्लोपः'। २–'हेर्धिः' 'झलां जश् झशि' 'ष्टुना ष्टुः' 'झरो झरि सवर्णे' 'नापदान्तस्य' 'अनुस्वारस्य ययि परसवर्णः'। ३–'पुषादि–द्युताद्य्–लृदितः परस्मैपदेषु'। ४–'तृणह इम्'। ५–'अञ्जेः सिचि' (इट्)। ६–'विज इट्'। इति रुधादिप्रकरणम् ।

---

१–'तनादिकृञ्भ्य उः'। २–'लोपश्चास्यान्यतरस्यां म्वोः'। ३–'थासा साहचर्यादेकवचनं 'थ' शब्दो गृह्यते । ४–'तनादिभ्यस्तथासोः' (सिचो वा लुक्) 'अनुदात्तोपदेश–वनति–तनो-

अतथाः । अतनिष्ठाः
सनोति । सनुते
सायात्[1] सन्यात्
असात[2] असनिष्ट
असाथाः । असनिष्ठाः
क्षणोति । क्षणुते
अक्षणीत्[3] अक्षत । अक्षणिष्ट
अक्षथाः । अक्षणिष्ठाः
क्षिणोति । क्षेणोति[4]
क्षेणितास्मि । क्षेणितासे
अक्षेणीत् । अक्षित । अक्षेणिष्ट
ऋणोति । अर्णोति
अर्णुतः । अर्णुवन्ति
आनर्ण । आनृणे । अर्णितास्मि
आर्णीत् । आर्त । आर्णिष्ट
आर्थाः । आर्णिष्ठाः
तृणोति । तर्णोति
तृणुते । तर्णुते । जघर्ण । जघृणे

अथ द्वावनुदात्तेतौ
वनुते । ववने । वनोति । ववान
मनुते । मेने
करोति । कुरुतः[5]-कुर्वन्ति[6]
कुर्वः[7] कुर्मः
चकर्थ । चकृव । चकृषे
कर्ता । करिष्यति
कुर्यात्[8] क्रियात् । कृषीष्ट
अकार्षीत् । अकृत[9] अकृथाः
संस्करोति[10] संस्कुर्वन्ति
परिष्करोति[11]
पर्यष्कार्षीत्[12] पर्यस्कार्षीत्
उपस्कृता-[13]कन्या
उपस्कृता-ब्राह्मणाः
एधोदकस्योपस्कुरुते
उपस्कृतं-भुङ्क्ते
उपस्कृतं-ब्रूते
संचस्कार[14] संचस्करतुः*

---

त्यादीनामनुनासिकलोपो झलि क्ङिति' (नलोपः)। १-'ये विभाषा'। २-'जन-सन-खनां सञ्झलोः'। ३-'ह्म्यन्त-क्षण-श्वस-जागृ-णि-श्व्येदिताम्' (वृद्धिनिषेधः)। ४-'संज्ञापूर्वको विधिरनित्यः' (न भवतीत्यात्रेयादयः, भवत्येवेत्यन्ये)। ५-'अत उत्सार्वधातुके' (गुणः)। ६-'न भकुर्छुराम्' (दीर्घनिषेधः)। ७-'नित्यं करोतेः' (उकारलोपः)। ८-'ये च'। ९-'ह्रस्वादङ्गात्' (सिचो लोपः)। १०-'सम्परिभ्यां करोतौ भूषणे' 'समवाये च' (सुट्)। ११-'परिनिविभ्यः' (षत्वम्)। १२-'सिवादीनां वाऽड्व्यवायेऽपि'। १३-'उपात्प्रतियत्न-वैकृत-वाक्याध्याहारेषु च'। १४-'सुट्कात्पूर्वः'।

---

* सम्पूर्वात्कृधातोः 'पूर्वं धातुरुपसर्गेण युज्यते' इति सिद्धान्तमाश्रित्य 'धातूपसर्गयोः कार्यमन्तरङ्गम्' इति पूर्वं "सम्परिभ्यां करोतौ भूषणे" इति सुटि संस्कृ इत्यस्माल्लिटस्तसोऽतुसि स्कृ-इत्यस्य द्वित्वे उरदत्वे "शर्पूर्वाः खयः" इति रेफसकारयोर्निवृत्तौ अभ्यासचुत्वे "ऋतश्च संयोगादेर्गुणः" इति गुणे 'सञ्चस्करतुः' इति रूपसिद्धेः। "कात्पूर्वः" "अड्भ्यासव्यवायेऽपि" इति

संचस्करिथ[१]
संचस्करिव
संस्क्रियात् । संस्कृषीष्ट
समस्कृत । समस्कृषाताम्

इति तनादिप्रयोगाः ॥

---

## अथ क्र्यादिप्रयोगाः ।

क्रीणाति[१] क्रीणीतः[२] क्रीणन्ति[३]
क्रीणीते । क्रीणाते । क्रीणते
चिक्राय । चिक्रियतुः
चिक्रयिथ । चिक्रेथ । चिक्रियिव
चिक्रियिषे । क्रेता । क्रेष्यति
क्रीयात् । क्रेषीष्ट
अक्रैषीत् । अक्रेष्ट
प्रीणाति । प्रीणीते
प्रमीणाति[४] प्रमीणीतः
ममौ[५] मिम्यतुः । ममिथ
ममाथ । मिम्ये । माता
मास्यति । मीयात् । मासीष्ट
अमासीत् । अमासिष्टाम् । अमास्त
सिनाति । सिनीते
सिषाय । सिष्ये । सेता

स्कुनोति[६] स्कुनुते
स्कुनाति । स्कुनीते
चुस्काव । चुस्कुवे
स्कोता । अस्कौषीत्
अस्कोष्ट
अथ परस्मैपदिनः
विष्टभ्नोति । विष्टभ्नाति
अवष्टभ्नोति । अवष्टभ्नाति
अवतष्टम्भ
व्यष्टभत्[७] व्यष्टम्भीत्
स्तुभ्नोति । स्तुभ्नाति
विष्कभ्नोति[८] विष्कभ्नाति
स्कुभ्नोति । स्कुभ्नाति
स्तभान[९] स्तुभान
स्कभान । स्कुभान
पक्षे-स्तभ्नुहि-इत्यादि

---

१-'कृञोऽसुट् इति वक्तव्यम्' । इति तनादिकप्रकरणम् ।

---

१-'क्र्यादिभ्यः श्ना' । २-'ई हल्यघोः' । ३-'श्नाऽभ्यस्तयोरातः' । ४-हिनुमीना? । ५-'मिनाति-मिनोति-दीङां ल्यपि च' (आत्वम्) । ६-'स्तम्भु-स्तुम्भु-स्कम्भु-स्कुम्भु-स्कुञ्भ्यः श्नुश्च' ७-'जॄ-स्तम्भु-म्रुचु-म्लुचु-ग्रुचु-ग्लुचु-ग्लुञ्चु श्विभ्यश्च' ८-'वेः स्कभ्नातेर्नित्यम्' । ९-'हलः श्नः शानज्झौ' ।

---

च न कर्तव्यमिति भाष्यकाराशयः । एवं समस्करोदित्यत्रापि विकरणान्तादभक्तादागमापेक्षयान्तरङ्गत्वात्प्रथमं सुट् भविष्यतीति कृत्वा 'अडभ्यासव्यवायेऽपि' इत्यंशो न कर्तव्य इति ।

धुनाति । धुनीते । धोता
स्कुनाति । स्कुनीते । स्कविता
द्रूणाति । द्रूणीते
पुनाति[1] पुनीते । पविता
लुनाति । लुनीते
स्तृणाति । स्तृणीते
तस्तार । तस्तरतुः
स्तरिता । स्तरीता
स्तृणीयात् । स्तृणीत
स्तीर्यात् । स्तरिषीष्ट[2] स्तीर्षीष्ट[3]
अस्तारीत् । अस्तारिष्टाम्
अस्तरिष्ट । अस्तरीष्ट । अस्तीर्ष्ट
कृणाति । कृणीते । चकार । चकरे
वृणाति । वृणीते । ववार । ववरे
वरिता । वरीता
वूर्यात् । वरिषीष्ट । वूर्षीष्ट
अवारीत् । अवारीष्टाम्
अवरिष्ट । अवरीष्ट । अवूर्ष्ट
धुनाति । धुनीते
दुधविथ । दुधोथ । दुधुविव

धोता । धविता
अधावीत्[4] । अधविष्ट । अधोष्ट

अथ बध्नात्यन्ताः परस्मैपदिनः ।

शश्रतुः[5] । शशरतुः[6]
शशरिव । शश्रिव
शरिता । शरीता । शृणीहि
शीर्यात् । अशारिष्टाम्
पप्रतुः । पपरतुः । पूर्यात्
मृणाति । ममार । ददरतुः । दद्रतुः
ऋणाति । अराञ्चकार
अरिता । अरीता
आर्णात् । आर्णीताम् । ईर्यात्
आरीत् । आरिष्टाम्
जिनाति[7] जिज्यौ । जिज्यतुः
ललौ[8] लिलाय । लाता । लेता
क्लिनाति । जानाति[9]
बध्नाति । बबन्धिथ । बबन्ध
बन्धा । बन्धारौ
भन्त्स्यति । अभान्त्सीत्
अबान्धाम्* अभान्त्सुः

१–'प्वादीनां ह्रस्वः' । २–'न लिङि' (दीर्घनिषेधः) ३–'उश्च' (इति कित्त्वम्) ४–'स्तु-सु-धूञ्भ्यः परस्मैपदेषु' । ५–'शॄ-दॄ-प्रां ह्रस्वो वा' इति ह्रस्वपक्षे यण् । ६–'ऋच्छत्यॄताम्' इति गुणः । ७–'ग्रहि-ज्या-वयि-व्यधि-' इति सम्प्रसारणे 'हलः' इति दीर्घे च कृते 'प्वादीनां ह्रस्वः'। ८–'विभाषालीयतेः' (इत्यात्वम्) ९–'ज्ञा-जनोर्जा'

* बन्धधातोर्लुङि तसि "तस्थस्" इत्यादिना तामि, "च्लि लुङि" इति च्लौ "च्लेः सिच्" इति सिजादेशे अटि "पूर्वत्रासिद्धम्" इति भष्भावात्पूर्वं सिज्लोपे "झषस्तथोर्धोऽधः" । इति धकारे "अतो हलादेर्लघोः" इति वृद्धौ नलोपे जश्त्वे च रूपम् । नचात्र "एकाचो बशो भष् झषन्तस्य स्ध्वोः" इति भष्भावः स्यादिति वाच्यम् । "पूर्वत्रासिद्धम्" इति शास्त्रेण भष्भावविधायकस्यासिद्धत्वात् सिज्लोपेन सकाराभावात् । न च प्रत्ययलक्षणेन पुनरपि भष्भाव इति वाच्यम् । "प्रत्ययलोप" इति सूत्रम्प्रति सिज्लोपस्यासिद्धत्वात् ।

वृणीते । वव्रे । ववृषे । ववृढ्वे
वरिता । वरीता
अवरिष्ट । अवरीष्ट । अवृत

इतः परस्मैपदिनः

श्रथ्नाति । श्रेथतुः । श्रेथुः
श्रेथिथ । शश्राथ । शश्रन्थ–शश्रथ
कुथ्नाति । चुकुन्थ । चुकोथ
मृद्नाति । ममर्द
मृड्णाति । गुध्नाति
कुष्णाति । कोषिता
निष्कोषिता[1] निष्कोष्टा
निरकोषीत् । निरकुक्षत्
क्षुभ्नाति[2] क्षुभ्नीतः
क्षोभिता । क्षुभान
नभ्नाति । तुभ्नाति
नभते । तोभते । नभ्यति । तुभ्यति
क्लिश्नाति[3] । क्लेशिता । क्लेष्टा
अक्लेशीत् । अक्लिक्षत्
अश्नाति । आश
उध्रस्नाति । उध्रसाञ्चकार
इष्णाति । एषिता[4] विष्णाति । वेष्टा
प्रुष्णाति । प्लुष्णाति
प्रोषिता । प्लोषिता
खच्ञाति । खौनाति[5]
चखाव । खविता । खौनीहि
हेठ्णाति । गृह्णाति । गृह्णीते
ग्रहीता[6] जग्रहिथ
गृह्यात् । ग्रहीषीष्ट
अग्रहीत्[7] अग्रहीष्टाम्
अग्रहीष्ट । अग्रहीषाताम्
अग्रहीषत

इति क्र्यादिप्रयोगाः ।

## अथ चुरादिप्रयोगाः ।

चोरयति[1] । चोरयते[2]
चोरयामास । चोरयिता
चोर्यात् । चोरयिषीष्ट
अचूचुरत्[3] अचूचुरत
चिन्तयति* अचिचिन्तत्
तेन-चिन्त्यात्-चिन्त्यते-इत्यादौ।

---

१–'निरः कुषः' । २–'क्षुभ्नादिषु च' ( णत्वनिषेधः ) ३–'शात्' इचुत्वनिषेधः । ४–'इषेस्तकारे श्यन्प्रत्ययात्प्रतिषेधः' । ५–'च्छ्वोः शूडनुनासिके च' । ६–'ग्रहोऽलिटि दीर्घः' । ७–'ह्म्यन्त–क्षण–श्वस–जागृ–णि–श्व्येदिताम्' इति वृद्धिनिषेधः । इति क्र्यादिप्रकरणम् ।

१–'सत्याप–पाश–रूप–वीणा–तूल–श्लोक–सेना–लोम–त्वच–वर्म–वर्ण–चूर्ण–चुरादिभ्यो णिच्' 'पुगन्तलघूपधस्य च' 'सनाद्यन्ता धातवः' (तिप–शपौ गुणाऽयादेशौ च) । २–'णिचश्च' इत्यात्मनेपदम् । ३–'णि–श्रि–द्रु–स्रुभ्यः कर्तरि चङ्' 'णौ चङ्युपधायाः' ह्रस्व 'चङि'

---

* ननु चितिधातौ इदित्करणं मास्तु, प्रक्रियालाघवात् 'चिन्त स्मृत्याम्' इत्येवोच्यताम् ।

चिन्तति । चिन्तेत्
जगाण । जगणतुः
यन्त्रयति । यन्त्रतीति चिन्त्यम्
स्फुण्डयति । स्फुण्डति
स्फुण्टयति । कुन्द्रयति
लाडयति । मिन्द्यति । मिन्दति
ओलण्डयति । ओलण्डति
लण्डयति । लण्डति । उलण्डयति
पीडयति अपीपिड ्[1] । अपिपीडत्
वाधयति । पारयति
पर्रति । परतः इत्यादिसिद्धिः
प्राथयति । अपप्रथत्[2]
पर्थयति । अपीपृथत्[3] अपपर्थत्
पाथयति । सम्बयति
असम्बत् । अशशम्बत्
कुट्टयति । अट्टयति । आट्टिटत्

लुण्ठयति । लुण्ठतीति भौवादिकस्य
तुञ्जयति । पिञ्जयत
तुञ्जति । पिञ्जति । पेसयति
असिस्मिटत् । स्माययते
पन्थयति । पन्थति
कुन्दयति । कुन्दति
विश्राणयति । ताडयति
खाडयति । खण्डयति
कण्डयति
अवकुण्ठयति । अवकुण्ठति
प्रनकयति । तोलयति । अतूतुलत्
कथं तुलयति तुलना इत्यादि
पण्डयति । पण्डति
पंसयति । पंसति
चम्पयति । चम्पति
क्षम्पयति । क्षम्पति

'हलादिः शेषः' 'दीर्घो लघोः' । १–भ्राज–भास–भाष–दीप–जीव–मील–पीडामन्यतरस्याम्'
२–'अत्स्मृ-दृ-त्वर-प्रथ-म्रद-स्तृ-स्पशाम्' । ३–'उऋ त्' ।

जच नलोपनिवृत्त्यर्थमिदित्वमिति वाच्यम्, चिन्तयतीत्यादौ णिचः किंत्वाभावादेव नलोपस्याप्रसक्तेः । नच णिजभावे आशीर्लिङि चिन्त्यादिति, कर्मणि लकारे यकि सति चिन्त्येत इत्यत्र च नलोपनिवृत्त्यर्थमिदित्वमिति शक्यम् । चुरादिणिचो नित्यत्वेन णिचं विना केवलात् चिन्त्येत् चिन्त्येत, इति प्रयोगस्य असम्भवादिति चेद् ? उच्यते—अत्रत्यमिदित्करणं णिचः पाक्षिकत्वे लिङ्गम् । एवं हि कदाचिद् चिन्त्यात् चिन्त्येत इति प्रयोगस्य सत्त्वात् तत्र नलोपनिवृत्त्यर्थमिदित्करणमिति स्वांशे चरितार्थम् । फलञ्च—चिन्तति चिन्तेत् इत्यादिप्रयोगोपपत्तिः । इदं हि ज्ञापकं चुरादित्वसामान्यापेक्षमिति वृत्तिकारादयः । तेन जगाण जगणतुः इत्यादीनां सिद्धिः । ज्ञापकस्य चितिधातुमात्रविषयकत्वे चौरादिकस्य गणधातोर्जगाण, जगणतुः इत्याद्युदाहरणानुपपत्तिः स्यात् । न चैवम् "आधृषाद्वा" इति व्यर्थमिति वाच्यम् । ज्ञापकसिद्धस्यासार्वत्रिकत्वात् । केचित्तु सर्वस्यापि चुरादेर्णिज्विकल्पे सति "आधृषाद्वा" इति कतिपयचुराद्यन्तर्गणपठितानां णिज्विकल्पविधेर्वैयर्थ्यमाशङ्क्य ज्ञापकं चितिधातुमात्रविषयकमाहुः । अस्मिन्नेव पक्षे ग्रन्थकारस्य सम्मतिरित्यलम् ।

ज्यापयति । ज्योसयति
भावयति । कल्पयति
आसयति–फलम्
पोषयत्याभरणम्
दालयति । पाटयति । पोटयति
लोटयति । तुञ्जयति । तुञ्जति
घाटयति । घण्टयति
अलुलोकत्[1] अलुलोचत्
वर्धयति । वर्धयति
वर्तति । वर्धति । पूरयति । पूरति
अशिष्वदत् । असिस्वदत्

इत्यास्वदीयाः

योजयति[2] । योजति । अयोजीत्
पर्चयति । पर्चति
पर्चिता । अपर्चीत् । साहयति[3]
लाययति । लयति । लेता
वर्जयति । वर्जति
वारयति । वरति । वरते
वरिता । वरीता
जारयति । जरति । जरिता । जरीता
ज्रायति । ज्रयति । ज्रेता
रेचयति । रेचति । रेक्ता
शेषयति । शेषति
शेष्टा । अशिक्षत्
तापयति । तपति । तप्ता

तर्पयति । तर्पति । तर्पिता
छर्दयति । छर्दति
छर्दिता । छर्दिष्यति
चर्पयति । छर्पयति
दर्भयति । दर्भति । दर्भिता
माययति । मयति । मेता
ग्रन्थयति । ग्रन्थति
अर्दयति । अर्दति । अर्दते
हिंसयति । हिंसति
आसादयति । आसीदति
आसत्ता । आसात्सीत्
शुन्धिता । अशुन्धीत्
अशुन्धिष्टाम्
जोषयति । जोषति
धूनयति[4] धवति । धवते
केचित्तु–धावयति
प्रीणयति । प्राययति
प्रयति । प्रयते
आपयति । आपति
आपत् । आप्ता । आपते
तानयति[5] । वितानयति
तनति । वितनति
चानयति । चनति
वादयति । वदति । वदते
ववदतुः । ववदिथ । ववदे

---

१–'नाग्लोपि–शास्वृ–दिताम्' । २–'आ धृषाद्वा' । ३–'स एवाऽयं नाग सहति कुलेभ्यः परिभवम् ।' ४–'धूञ्प्रीञोर्नुग्वक्तव्यः' । कविरहस्ये–'धूनोति' चम्पकवनानि धुनोत्यशोकं चूतं 'धुनाति धुवति' स्फुटितातिमुक्तम् । वायुर्विधू–नयति चम्पकपुष्परेणून्यत्कानने धवति चन्दन-मञ्जरीश्च' । ५–'उपसर्गाच्च दैर्घ्यं' ।

वच्यात् । वाचयति । वचति
वक्ता । अवाक्षीत्
मानयति । मानति । मानिता
स्तम्भे-मानयते
इत्याकुस्मीयाः
मन्यते । मनुते
भावयते । भवते । भवति
कण्टते । मार्जयति । मार्जति
मार्जिता । मार्ष्टा
मर्षयति । मार्षति मर्षते
मृष्यति । मृष्यते । मर्षति
घर्षयति । घर्षति
इत्याधृषीयाः ।

( अथ अदन्ताः )

कथयति[1] अचकथत्[2]
वरयति । वारयति
गणयति
अजीगणत्[3] अजगणत्
अररहत् । स्तनयति
गदयति । अजगदत्
पतयति । पतति । पताञ्चकार
अपतीत् । पातयति । अपीपतत्
पषयति । स्वरयति । रचयति
महयति । महति । सारयति
कृपयति । श्रथयति । अबभामत्
सूचयति । असुसूचत्
अजुगोमत् । अचुकुमारत्
अससामत् । असोषमत्
वेलयति । कालयति
वातयति । अववातत् । अजगवेषत्
अनिनिवासत् । सभाजयति
ऊनयति ( ओः पुयण्जीति * )

---

१–अल्लोपस्य स्थानिवद्भावान्न वृद्धिः। २–अग्लोपित्वान्न दीर्घसन्वद्भावौ । ३–'ई च गणः' ।

* ऊनधातोर्णौ चङि द्वित्वात्परत्वादन्तरङ्गत्वाच्च अल्लोपेन 'अजादेर्द्वितीयस्ये'ति णिचा सह द्वित्वे 'औनिनदित्यनिष्टं' प्रसज्येत, नच 'द्विर्वचनेऽची'ति सूत्रेण द्वित्वे कर्तव्ये अल्लोपस्य स्थानिवद्भावनिषेधाद्वा न शब्दस्य द्वित्वं सम्भवतीति वाच्यं, णिचो द्वित्वनिमित्तत्वाऽभावादत आह—'ओः पुयण्जीति' । अयं भावः—"ओः पुयण्जपरे" इति सूत्रस्य पिपावयिषति बिभावयिषति यियावयिषति रिरावयिषति लिलावयिषति जिजावयिषति इत्युदाहरणेषु द्वित्वप्रत्ययनिमित्ते णिचि "द्विर्वचनेऽचि" इति निषेधाऽप्रवृत्त्या द्वित्वात्प्रागेव परत्वाद्वृद्ध्यावादेशयोः कृतयोरभ्यासेष्वाकारस्य ह्रस्वे सति "सन्यतः" इत्येवेत्वसिद्धेः पवर्गयण्प्रत्याहारजकारग्रहणं व्यर्थम् । ओः पयोरपरयोरित्येव सूत्रमस्तु। पिपावयिषति यियावयिषतीत्यत्रोक्तरीत्या "सन्यत" इतीत्वसिद्धावपि पिपविषति यियविषतीत्यत्र पूङ्धातोर्युधातोश्चाण्यन्तात् सनि अभ्यासे इत्वार्थं तदावश्यकत्वात् । वर्गप्रत्याहारजकारग्रहणन्तु व्यर्थमेव, एवञ्च तदुक्तार्थे ज्ञापकम् । 'णिच्यच आदेशो न स्यात् द्वित्वे कर्तव्ये' ज्ञापितेऽस्मिन्नर्थे बिभावयिषतीत्यादिषु णिचि लुप्ते सति "चङि" इति द्वित्वे कार्ये प्रत्ययलक्षणमाश्रित्य णिचि गुणावादेशयोः प्रतिषेधे सति उवर्णान्तानां द्वित्वेऽभ्यासेऽकाराभावेन "सन्यतः" इत्यस्याप्रवृत्त्या वर्गप्रत्याहारजकारग्रहणं स्वांशे चरितार्थम् । ज्ञापन-

औननत्* मा भवानूननत्
अदध्वनत् । कूटयति
सङ्केतयति
ग्रामयति । कुणयति । गुणयति
केतयति । निकेतयति । अतिस्तेनत्
अथ आ गर्वादात्मनेपदिनः
पदयते । अपपदत
गृहयते । मृगयते । मृग्यति
स्थूलयते । अतुस्थूलत
अर्थयते । आर्तथत
असस्त्रत । सिसत्रयिषते । गर्वयते
इत्यागर्वीयाः

सूत्रयति । असुसूत्रत्
मूत्रयति । मूत्रति
अपपारत् । अतितीरत्
पुटयति । अदिद्वेकत्
कत्रयति । कत्रति
कर्तयति । कर्तति
पटुमाचष्टे—पटयति[1]
अपीपटत् । अपपटत्
अश्वेनाऽतिक्रामति—अश्वयति[2]
हस्तिनाऽतिक्रामति—हस्तयति
कंसवधमाचष्टे—कंसं घातयति[3]
कंसमजीघतत्†

१—'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' । २—'तेनाऽतिक्रामति' । ३—'धातुरूपञ्च' 'आख्यानात्कृतस्तदाऽऽचष्टे कृल्लुक्प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम्' ।

---

फलन्तु—तुतावयिषति, अतूतवत्, ऊर्णुनावयिषति, और्णूनवत्, पुस्फारयिषति, अपुस्फरत्, औननत्, इति ।

* ननु ऊनधातोर्णिचि धातुत्वाल्लुङि तिपि च्लौ "णिश्रि०" इत्यादिना चङि आडागमे 'आ ऊन इ अ त्' इति स्थिते यियविषति पिपविषते इति प्रयोगद्वये इटि सति "द्विर्वचनेऽचि" इति निषेधेन पूर्वं द्वित्वेऽभ्यासेऽकाराभावेनेत्वं दुर्लभं स्यादिति तत्र इकारलाभार्थम् "ओः पयण्योः" इत्येव सूत्रयितव्ये वर्णप्रत्याहारजकारग्रहणं व्यर्थीभूय 'णिचि अच आदेशो न स्याद् द्वित्वे कर्तव्ये' इति ज्ञापयति । तेन "आ ऊन इ अ त्" इत्यत्र उक्तज्ञापनेन पूर्वं द्वित्वे ततोऽतो लोपे वृद्धौ च 'औननत्' इति रूपं सिद्ध्यति । अन्यथा प्रथममकारलोपे ततो णिशब्दस्य द्वित्वे, औनिनत् इति रूपापत्तिः । अबीभवत् इत्यादौ परिनिष्ठिते रूपे औननत् इत्यत्र च साधनदशायां द्वित्वस्योत्तरखण्डेऽकारलाभेन ज्ञापकस्य सजातीयापेक्षत्वाद्यत्र द्विरुक्तादुत्तरखण्डेऽवर्णो लभ्यते, तत्रैव परिभाषा लगति । एवं हि अचिकीर्तदिति रूपं सिद्धम्भवति । अन्यथा तत्रापि परिभाषाप्रवृत्तौ तु पूर्वं कृतशब्दस्य द्वित्वे उक्तरूपासिद्धिः । परिभाषाया अप्रवृत्तौ तु पूर्वम् "उपधायाश्च" इति सूत्रेणेत्वे ततो द्वित्वादौ उक्तरूपसिद्धिः ।

† कंसवधमाचष्टे इत्यर्थे कंसवधशब्दात् णिचि, तस्मात् लुङि तिपि च्लेश्चङि "आख्यानात् कृतस्तदाचष्टे कृल्लुक्प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम्" इति कंसं हन् इति जाते "चङि" इति द्वित्वे पूर्वस्याभ्याससंज्ञायां "हलादिः शेषः" इति लोपे "कुहोश्चुः" इति चुत्वे "हनस्तो

| | |
|---|---|
| असिना हन्ति–असयति[1] | कथां–वर्णयति । हरिं–वर्णयति |
| खिम्रयति[2] वण्टयति । लक्षयति | अपवर्णत् |
| वण्टापयति । लक्षापयति | आन्दोलयति । प्रेङ्खोलयति |
| शाकटायनमते–कथापयति | विडम्बयति । अवधीरयति |
| गणापयति । असलक्षामत | 'रामो राज्यमचीकर'दिति |
| अतुस्तोमत् । आन्दधत् | हस्तौ निरस्यति—हस्तयते[4] |
| आञ्चकत् । आञ्जगत् | पादयते । श्वेतयते[5] |
| अवव्ययत् । अविच्छेदत् । छदयति | अश्वतरमाचष्टे—अश्वतरयते |
| सुवर्णं–वर्णयति | गालोडयते । आह्वरयते |

इति चुरादिप्रयोगाः ।



१–'कर्तृकरणाद्धात्वर्थे' । २–'कदाचिद्दर्शने' । ३–'बहुलमेतन्निदर्शनम्' । ४–'णिङङ्ग-निरसने' । ५–'श्वेताश्वाश्वतरगालोडिताह्वरकाणामश्वतरेतकलोपश्च' । **इति चुरादिप्रकरणम् ।**

---

ऽचिण्णलोः" इति तकारेऽन्तादेशे "हो हन्तेः" इति हकारस्य घकारे अटि सन्वद्भावे "सन्यतः" इतीत्वे "दीर्घो लघोः" इति दीर्घे "इतश्च" इतीकारलोपे च रूपम् । ननु कंसवधशब्दाद् णिचि कृते कंसवधशब्दस्याङ्गसंज्ञा धातुसंज्ञा च भवति, ततः कंसवधशब्दात्पूर्वमडागमः कंसशब्दस्य द्वित्वञ्च भवितुमर्हति । किन्तु 'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम्' इति परिभाषया कुत्वतत्वे न भवतस्तत्र, प्रकृतिवच्चेति चकारो भिन्नक्रमः कारकं चात्कार्य्यम्, हेतुमण्णिचः प्रकृतेर्हन्यादेर्हेतुमण्णौ यादृशं कारकं धातावनन्तर्भूतं द्वितीयान्तं यादृशञ्च कार्य्यं कुत्वतत्वादि तदिहापीत्यर्थात् । अत्र "हनश्च वधः" इति अप्प्रत्ययो वधादेशश्चेति ।

**इति 'दरभङ्गा' मण्डलान्तर्गत 'तरौनी' ग्रामवासिश्रीमदनन्तलालझाशर्मात्मज-श्रीरामचन्द्रझासम्पादिता मध्यमातृतीयखण्डप्रयोगसूची समाप्ता ।**

---

मुद्रकः—विद्याविलास प्रेस, बनारस सिटी ।

# विकारार्थकाद्धितरुक्तप्रक्रियान्तभागे प्रश्नाः ।

१९४८

## प्रथमं पत्रम्

१—तापनीयः, पारशवः, साहसिकः, लालाटिकः, दैष्टिकः, आतिथेयम्, विश्वजनीनम्, प्रासादीयम्, एते प्रयोगाः सूत्रविग्रहनिर्देशपूर्वकं साधनीयाः । ....१०

२—वार्तिकम्, सार्वलौकिकः, आढकीना, शैर्षच्छेदिकः—ससूत्रं सविग्रहं चैतान् संसाध्य वृद्ध्यायलाभशुल्कोपदानां परस्परं भेदं प्रदर्श्य, अंशवस्नभृतीनामर्था अपि लेखनीयाः । ....१०

अथवा

वारिपथिकम्, द्विवार्षिकः, वैशाखः, जाड्यम्, पौरोहित्यम्, सम्मुखीनः, कौपीनम्, अधित्यका—सूत्रविग्रहनिर्देशपुरस्सरमेतेषां सिद्धिप्रकारः प्रदर्श्यताम् ।

३—कतिपयथः, राजन्वती, ज्योत्स्ना, कुतः, पुरस्तात्, द्वैधम्, ज्यायान्, वाचिकः । एषु केचन पञ्चैव प्रयोगाः साधु साधनीयाः।१०

४—कतरः, द्विपदिकाम्, गार्गीभवति, द्वितीया करोति, एकैकया—विशेषसूत्रलौकिकविग्रहोपन्यासपूर्वकमेषां साधुत्वं प्रदर्शनीयम्१०

५—शताच्च ठन्यतावशते । गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्यत् । तद्धरति वहत्यावहति भाराद्वंशादिभ्यः । नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः । एनबन्यतरस्यामदूरेऽपञ्चम्याः । किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे । एषु केषाञ्चिच्चतुर्णां सूत्राणां पदच्छेदं विधाय, अर्थोदाहरणे विलिख्य, अष्टाध्यायीगताध्यायसंख्याऽपि प्रदर्शनीया । ....१०

नोटः—प्रश्नोत्तर-लेखन के लिये "चौखम्बा संस्कृत पुस्तकालय, बनारस" से नवीन प्रकाशित "व्याकरण मध्यमा तृतीय खण्ड प्रश्नोत्तरी" पढ़िये ।

# सिद्धान्तकौमुद्या दशाब्द्याः प्रश्नाः ।

१९४८

## द्वितीयं पत्रम्

१—अभूवन्, प्रत्याञ्चकृषे, ऊर्दते, तुतुम्पतुः, धिनोति, अस्यति, अप्यपतत्, परिजहते—

एतेषु यथेच्छं पञ्च प्रयोगान् साधयित्वा कृषधातोर्लुङि प्रथमपुरुषे रूपाणि प्रदर्शयत । ....१०

२—गूहति, भ्रियात्, जहार, आरिथ, तेरुः, पर्यष्वजुक्त, ऊपतुः, विव्याय—

एषु यथाभिलाषं पञ्चानां रूपाणां सिद्धिं विधाय गाङ्धातो र्लोटि प्रथमपुरुषे रूपाणि लेख्यानि । ....१०

३—"यद्यपि ङिच्चेत्ययमपवादः" इत्यादिः,
"इह सवर्णदीर्घस्य अभ्यासग्रहणेन ग्रहणात्" इत्यादिः,
"अत्र वकारस्य हलपरत्वाद् उपधायां चेति दीर्घे प्राप्ते" इत्यादिः ।
एतासु तिसृषु काप्येका फक्किका सप्रपञ्चं व्याख्यायताम् । ....१०

४—अध्यगीष्ट, सुष्वाप, शाधि, धत्तः, आस्यति, प्रहिणोति, जिघाय—

एषु केषामपि पञ्चानां सिद्धिप्रकारमुपवर्ण्य कृष्धातोर्लुङि प्रथमपुरुषैकवचने रूपाणि प्रदर्शयत । ....१०

५—शिण्ढि, संस्क्रियात्, स्कुनोति, ग्रहीता, अपीपिडत्, आमयति ।

एषु चतुरः प्रयोगान् तत्तद्विशेषकार्योपपादकपूर्णसूत्रोपन्यासपूर्वकं साधयत । ....१०

## सिद्धान्तकौमुद्याः दशागण्यां प्रश्नाः ।

१६४९

### द्वितीयं पत्रम्

१—भविता, एधाञ्चक्रे, जम्भते, अवक्रमत, ष्ठीवति, अस्रशत् एषु यथाकामं पञ्च प्रयोगान् सिद्धान्तरीत्या साधयित्वा 'मत्स्योदके अनुष्यन्देते, अत्र केन कथं वा षत्वम् ? ....१०

२—निषसाद, चखनतुः, अदधत्, ससौ, अपात्, अगमत्, एतेषु केषामपि पञ्चानां सिद्धिं प्रदर्श्य, गुञ्जास्नावनुपमां च खदिर-वपरिभ्यां च, अनयोरर्थः सोदाहरणं लेख्यः । ....१०

३—जघसिथ, ऊर्णुनाव, अजागरीत्, अजुहवुः, वेवेष्टि, दिदीये, अजनि, एषु यथेष्टं पञ्च प्रयोगान् ग्रन्थोक्तदिशा साधयत । ....१०

४—चिकाय, बभज, चकरतुः, कृणोति, कुर्यात्, स्त्रीणाति, कीर्तयति, एतेषां धात्वर्थनिर्देशपूर्वकं सिद्धिः प्रतिपादनीया । ....१०

५—'ओः पुयण्ज्योतिसूत्रे अपरोहिति वक्तव्ये, इत्यादेस्तात्पर्यमुपदर्श्य, लक्ष्ये संघटनीयम् । ....१०

अथवा

अनुदात्तानां धातूनां कारिकाः प्रदर्श्य तद्व्याख्यानं सुस्पष्टतया वर्णनीयम् ।

विकारार्थकादिद्विरुक्तप्रक्रियान्तभागे प्रश्नाः ।

१९५६

प्रथमं पत्रम्

१—आश्मः, औपैम्, पारशवः, स्वापतेयम्, सौखशायनिकः, सांस्थानिकः, नैकटिकः, प्रलङ्ग्यः, मूलयानुग्राः, पारिषदः, सव्याख्यसूत्रनिर्देशपूर्वकं केचन पञ्चैव साधनीयाः । ...१०

अथवा

ऊधन्यः, अव्यम्, वारकीणम्, आपथेयम्, औपानह्यो मुञ्जः, आकर्षिकी, रथिकः, धानुष्कः' कौद्दालिकः, स्थाणिलम् केषांचिदष्टानां ससूत्रोपन्यासं प्रकृतिप्रत्ययौ निर्देश्यौ ।

२—पञ्चकः, तावतिकः, वासनम्, प्रतिकौ, अध्यर्थकार्षापणम्, द्विविस्तम्, द्विपण्यम्, पञ्चगोणिः, पुत्र्यः, सार्वलौकिकः, आधिकः, एषां केचनाष्टौ ससूत्रनिर्देशं साध्याः । ...१०

३—चात्वारिंशानि ब्राह्मणानि, आर्त्विजीनो यजमानः, यौजनशतिक आचार्यः । एतां स्त्रीन् प्राकरणिकसूत्रनिर्देशपुरःसरं संसाध्य एक एव मासिकशब्दः कं कमर्थं क्रोडीकृत्याध्यापक-कर्मकर-व्याध्युत्सवान् विशिनष्टि ? इति समाधाय संख्याया इति सूत्रे संवत्सरग्रहणस्य फलं लेख्यम् । ( ३ + ३ + ४ )= ...१०

४- वाजपेयिकी, अनुप्रवचनीयम्, रामणीयकम्, शालेयम्, त्रिशंशतम्, इषेत्वकः, पथकः, द्रुमः, मलीमसः, पेषमः, करिष्ठः, कुतपः । केचन दश ससूत्रनिर्देशं साध्याः । ...१०

५—चञ्चत्कः, औपयिकः, प्रवाह्निकातः कुरु, सुखाकरोति, भद्राकरोति । एतान् साधयित्वा ससूत्रोपन्यासम्, "दलद्वये टावभाव" इत्यादिका कारिका व्याख्येया 'द्वन्द्वं रहस्ये'त्यादि सूत्रं वा उदाहरणप्रदर्शनपूर्वकं व्याख्येयम् । ...१०

---